# नागानन्दम् ।

## नाटकम् ।

महाकवि श्रीहर्षदेवविरचितम् ।

पण्डितकुलपतिना,

बि, ए, उपाधिधारिणा

श्रीमज्जीवानन्द-विद्यासागर-भट्टाचार्य्येण

विरचितया व्याख्यया समुद्भासितम् ।

तदात्मजाभ्यां

पण्डित-श्रीआशुबोध-विद्याभूषण-

पण्डित-श्रीनित्यबोध-विद्यारत्नाभ्यां

परिवर्द्धितटीकया प्रतिसंस्कृत्य प्रकाशितम् ।

षष्ठ संस्करणम् ।

कलिकातामहानगर्य्याम्,

"वाचस्पत्ययन्त्रे"

मुद्रितम् ।

ई १८९६ ।

प्रकाशक— पण्डित-श्रीप्राणबोध-विद्याभूषण
तथा
पण्डित-श्रीनित्यबोध-विद्यारत्न।

प्राप्तिस्थान— २ नं०, रमानाथ मजुमदार ष्ट्रीट्, आम्हार्ष्ट-
ष्ट्रीट् पोष्ट-अफिस। कलिकाता।

प्रिण्टर—वि, वि, मुखर्जी।

२ नं०, रमानाथ मजुमदार ष्ट्रीट्, कलिकाता।

# नागानन्दम् । (क)

## प्रथमोऽङ्कः (ख) ।

### नान्दी (ग) ।

ध्यानव्याजमुपेत्य चिन्तयसि काम् ? उन्मील्य चक्षुः क्षणं
पश्यानङ्गशरातुरं जनमिमं त्रातापि नो रक्षसि ? ।

टीकाकृन्मङ्गलाचरणम् ।

वाग्देवीं हृदये ध्यात्वा बालानां बोधहेतवे ।
नागानन्दस्य विवृतिर्जीवानन्देन तन्यते ॥

(क) नागानन्दमिति ।—नागानां पन्नगानाम्, आनन्दो यत्र तत् नागानन्दं, नाटकमित्यस्य विशेषणम् । पूर्वमृतानां नागानां पुनर्जीवनप्राप्तिरूपश्चात्र आनन्दः । एतन्नाम्ना च गर्भितार्थस्य प्रकाशनात् युक्तमेवेदं नाम—"नाम कार्य्यं नाटकस्य गर्भितार्थप्रकाशनम्" इति दर्पणोक्तेः । एवञ्च काश्मीरनृपतयो हि नागवंशीयाः, अतस्तद्वंशीयानामानन्दवर्णनमकारि काश्मीरराजेन श्रीहर्षेण ।

(ख) अङ्क इति ।—अङ्कयति लक्षयति, रसभावादीन् व्यञ्जयतीति यावत् इति अङ्कः । [ पचाद्यच् ] तल्लक्षणमुक्तं दर्पणे यथा—"प्रत्यक्षनेतृचरितो रसभावसमुज्ज्वलः । भवेदगूढशब्दार्थः क्षुद्रचूर्णकसंयुतः ॥ विच्छिन्नावान्तरैकार्थः किञ्चित् संलग्नबिन्दुकः । युक्तो न बहुभिः कार्य्यैर्बीजसंहृतिमान् न च ॥ नानाविधानसंयुक्तो नातिप्रचुरपद्यवान् । आवश्यकानां कार्य्याणामविरोधाद्विनिर्मितः ॥ नानेकदिननिर्वर्त्यकथया सम्प्रयोजितः । आसन्ननायकः पात्रैर्युतस्त्रिचतुरैस्तथा ॥ दूराह्वानं वधो युद्धं राज्यदेशादिविप्लवः । विवाहो भोजनं शापोत्सर्गौ मृत्यू रतं तथा ॥ दन्तच्छेद्यं नखच्छेद्यमन्यत् व्रीडाकरञ्च यत् । शयनाधरपानादि नगराद्यवरोधनम् ॥ स्नानानुलेपने चैभिर्वर्जितो नातिविस्तरः । देवीपरिजनादीनाममात्यवणिजामपि ॥ प्रत्यक्षचित्रचरितैर्युक्तो भावरसोद्भवैः । अन्तनिष्क्रान्तनिखिलपात्रोऽङ्क इति कीर्त्तितः ॥" इति ।

(ग) नान्दीति ।—नन्दयति इष्टानिति नान्दी विघ्नविनाशार्थं नटैः

मिथ्याकारुणिकोऽसि निर्घृणतरस्त्वत्तः स कोऽन्यः पुमान् ?
सेर्ष्यं मारवधूभिरित्यभिहितो बुद्धो जिनः पातु वः ॥ १ ॥

अपि च—

कामेनाकृष्य चापं हतपटुपटहावल्गिभिर्मारवीरैः
भ्रूभङ्गोत्कम्पजृम्भास्मितचलितदृशा दिव्यनारीजनेन ।

क्रियमाणो मङ्गलाचरणविशेषः । तदुक्तं दर्पणे—"आशीर्वचनसंयुक्ता स्तुतिर्यस्मात् प्रयुज्यते । देवद्विजनृपादीनां तस्मान्नान्दीति कथ्यते ॥" इति ।

आशीःसंयुक्तस्तुतिवचनरूपं मङ्गलमाचरति, ध्यानव्याजमिति कामेनेति च श्लोकाभ्याम् ।—ध्यानं समाधिरेव, व्याजः छलं, तम् उपेत्य प्राप्य, आश्रित्येत्यर्थः, कां, कान्तामिति शेषः, चिन्तयसि ? भावयसि ? चक्षुः उन्मील्य विकाश्य, न तु ध्यान-व्याजेनेति भावः, अनङ्गशरातुरं नास्ति अङ्गं यस्य सः अनङ्गः कन्दर्पः, शिवनयनानलेन दग्धत्वात् मनसिजत्वात् वा, ("कन्दर्पो दर्पकोऽनङ्गः" इत्यमरः) तस्य शराः सम्मोहनादयः, यथा—"सम्मोहनोन्मादनौ च स्तम्भनः शोषणस्तथा । तापनश्चेति कामस्य पञ्च बाणाः प्रकीर्तिताः ॥" इति ; तैः आतुरं कामबाणविद्धम्, इमं जनं, मामिति भावः, (इति प्रत्येकोक्तिः, अन्यथा मारवधूभिरित्यत्र बहुवचनवैयर्थ्यं स्यात्) पश्य अवलोकय, त्राता रक्षकोऽपि, रक्षणसमर्थोऽपीति यावत्, नो रक्षसि ? कारुणिकः दयाशीलोऽसि, इति यत् तत् मिथ्या तव कारुणिकत्वं मिथ्येत्यर्थः ; यद्वा—"मिथ्याकारुणिकः" इत्येकं पदम्, [उभयत्र जातार्थे ठक्] त्वत्तः अन्यः, [कवीनां निरङ्कुशत्वात् अत्र अपादानपञ्चम्या अपि सम्भिल्] स कः पुमान् पुरुषः, निर्घृण-तरः ? नास्ति घृणा दया यस्य सः ("कारुण्यं करुणा घृणा" इत्यमरः, ततः तरप्) अतिनिर्दयः ? अस्तीति शेषः ; न कोऽपीत्यर्थः, (अत्र कामुकीप्रार्थनापूरणे शक्तिमत्ता-द्योतनार्थं पुमान् इति पदं प्रयुक्तम्) मारवधूभिः, कामवधूभिः, कामिनीभिरिति भावः, सेर्ष्यं सासूयं यथा तथा, इति इत्थम्, अभिहितः उक्तः, तिरस्कृत इति यावत्, बुद्धः ज्ञानी, [बुद्धं बोधः, भावे निष्ठा, तदस्य अस्तीति बुद्धः, अर्श-आदित्वादच्] बुद्धधर्मावलम्बी वा, जिनः ("जिनोऽर्हति च बुद्धे च पुंसि स्यादिजत्वरे त्रिषु" इति मेदिनी) वः युष्मान्, सामाजिकानिति भावः, पातु रक्षतु । [अत्र "बुद्धः जिनः" इत्येकपर्यायशब्दप्रयोगेऽपि बुद्धो ज्ञानीति भिन्नार्थत्वात् पुनरुक्तवदाभासोऽलङ्कारः, तदुक्तं दर्पणकृता—"आपाततो यदर्थस्य पौनरुक्त्या-

सिद्धैः प्रह्वोत्तमाङ्गैः पुलकितवपुषा विस्मयात् वासवेन
ध्यायन् बोधेरवाप्तो न चलित इति वः पातु दृष्टो मुनीन्द्रः ॥२॥

नान्द्यन्ते—

सूत्रधारः । अलमतिविस्तरेण । अद्याहमिन्द्रोत्सवे सबहु-
मानमाहूय (घ) नानादिग्देशागतेन राजश्रीहर्षदेवस्य पाद-

---

ऽवभासनम । पुनरुक्तवदाभासः स भिन्नाकारशब्दगः ॥" इति ]। तथाऽत्र वाताऽपि
नो रचयि. मिथ्याकारुणिकः. निर्घृणतरः इति पदद्वयस्य प्रायेणैवैकार्थकत्वात पुनरात्त-
पदता दोषः। शार्दूलविक्रीडितं वृत्तं—"सूर्याश्वैर्यदि मः सजौ सततगाः शार्दूल-
विक्रीडितम" इति तल्लक्षणात । १ ॥

कामेनेति।—कामेन चापं कार्मुकम्, आकृष्य, प्रहारार्थेति भावः, [अत्र स्थितेनेति
पदमध्याहार्य्यम, अथवा सर्वेरेव तृतीयान्तपदैः "विस्मयाद्दृष्टः" इति पदेन सम्बन्धः]
मारवीरैः कामानुचरैः. वसन्तचन्द्रमलयानिलकोकिलादिभिरिति भावः, वीरैः कामिजनप्रहारार्थं
समुद्यतैर्योधैरिति भावः, हताः ताडिताः, पटवः सुश्राव्याः, ये पटहाः वाद्यभेदाः, तद्वत्
[ अतः अत्र प्रतीयमानोपमा बोद्धव्या] आवल्गा न उद्धतं चरन्तीति [ औणादिः क्विप्, ]
तादृशा तैः वल्गिभिरिति भावः, दिव्यनारीजनेन सुराङ्गनावर्गेण, भ्रूभङ्गेन उत्कम्पेन जृम्भया
स्मितेन च कामजविकारैरित्यर्थः, चलिते चञ्चलतां गते. दृशौ नयने यस्य तादृशेन
सता, सिद्धैः देवयोनिविशेषैः, प्रह्वं नतम, उत्तमाङ्गं शिरो येषां तथोक्तैः अवनतमस्तकैः,
प्रणमद्भिरिति यावत. तथा वासवेन इन्द्रेण. पुलकितवपुषा रोमाञ्चितशरीरेण, न चलित
इति विस्मयात चमत्कारबुद्ध्या, दृष्टः ध्यायन् समाधौ तिष्ठन्. बोधेः अवाप्तः ज्ञान-
निविष्टचेता इत्यर्थः. मुनीन्द्रो बुद्धः ( "मुनीन्द्रः श्रीघनः शास्ता" इति बुद्धपर्य्याये
अमरः ) वः युष्मान्. पातु रक्षतु ; "विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त
एव धीराः" इति भावः। [अत्र विचलनकारणे वर्त्तमानेऽपि विचलनाभावात्
विशेषोक्तिः, तथा विचलनाभावं प्रति हेत्वभावात् विभावना इत्यनयोः सन्देह-
सङ्करः ]। स्रग्धरा वृत्तम ॥ २ ॥

( घ ) नान्द्यन्ते सूत्रधारः इति तु प्राचीनपदवीमनुसृत्यैव लिखितम।
"नान्द्यन्ते सूत्रधार इदं प्रयोजितवान् इत्यस्याभिप्रायः" इति साहित्यदर्पणम।
सूत्रधारः प्रधाननटविशेषः,—"नाट्योपकरणादीनि सूत्रमित्यभिधीयते। सूत्रं धारय-
तीत्यर्थे सूत्रधारो निगद्यते ॥" इति लक्षणात्। सबहुमानं यथा स्यात् तथा, आहूय
इति क्रियाया विशेषणम्।

पद्मोपजीविना (ङ) राजहंसमूहेनोक्तः,—"यत्तदस्मत्स्वामिना श्रीहर्षदेवेनापूर्ववस्तुरचनाऽलङ्कृतं (च) विद्याधरचक्रवर्त्ति-प्रतिबद्धं (छ) नागानन्दं नाम नाटकं कृतमस्माभिः श्रोत्रपरम्परया श्रुतं, न च प्रयोगतो (ज) दृष्टम्; तत्तस्यैव राज्ञः सकलजनहृदयाह्लादिनो (झ) बहुमानात् (ञ) अस्मासु चानुग्रहबुद्धा यथावत्प्रयोगेण अद्य त्वया नाटयितव्यम्" (ट) इति। तत् यावत् इदानीं नेपथ्यरचनां कृत्वा यथाऽभिलषितं सम्पादयामि। [परिक्रम्यावलोक्य च]। आवर्जितानि (ठ) च सकलसामाजिकमनांसि इति मे निश्चयः। यतः,—

> श्रीहर्षो निपुणः कविः, परिषदप्येषा गुणग्राहिणी,
> लोके हारि च सिद्धराजचरितं, नाट्ये च दक्षा वयम्।
> वस्त्वेकैकमपीह वाञ्छितफलप्राप्तेः पदं, किं पुन-
> र्मद्भाग्योपचयादयं समुदितः सर्वो गुणानां गणः॥ ७॥

(ङ) पादपद्मोपजीविना चरणारविन्दाश्रयेण।

(च) अपूर्वेति।—अपूर्वम् अद्भुतं, यत् वस्तु इतिवृत्तरूपं, तस्य रचनया वर्णनेन, अलङ्कृतं शोभितम्।

(छ) विद्याधरेति।—विद्याधराणां चक्रवर्त्तिना अधीश्वरेण, प्रतिबद्धं युक्तं, तत्कथासंवलितमित्यर्थः।

(ज) प्रयोगतः अभिनयेन।

(झ) सकलेति।—सकलानां जनानां हृदयाह्लादिनः मनोरञ्जकस्य।

(ञ) बहुमानात् बहुगौरवात्।

(ट) नाटयितव्यम् अभिनेतव्यम्।

(ठ) आवर्जितानि वशीकृतानि, शुश्रूषार्थमभिमुखीकृतानीति यावत्।

सभ्यचित्ताकर्षणकारणं व्यनक्ति, श्रीहर्ष इति।—श्रीहर्षः निपुणः विचक्षणः, कविः काव्यरचयिता, एषा परिषदपि सभ्यमण्डली अपीत्यर्थः, गुणग्राहिणी गुणपक्षपातिनी, लोके जगति, सिद्धराजस्य सिद्धानां नृपस्य, चरितं हारि मनोहारि च, वयञ्च नाट्ये अभिनयव्यापारे, दक्षाः निपुणाः, एकैकमपि पूर्वोक्तं वस्तु श्रीहर्षादिकमिति भावः, इह अस्मिन् नाट्यविषये, वाञ्छितफलप्राप्तेः

तत् यावत् अहं गृहं गत्वा गृहिणीमाहूय सङ्गीतकमनुतिष्ठामि । [परिक्रम्य नेपथ्याभिमुखमवलोक्य] इदमस्मद्गृहं, यावत् प्रविशामि । [प्रविश्य] आर्य्ये ! (ङ) इतस्तावत् ।

नटी । [प्रविश्य सास्रम्] (ढ) अज्ज ! इअम्हि मंदभग्गा । आणवेदु अज्जउत्तो, को णिओओ अणुचिट्ठीअदु त्ति (१) ।

सूत्र । [नटीमवलोक्य] आर्य्ये ! नागानन्दे नाटयितव्ये किमिदमकारणमेव रुद्यते ?

नटी । अज्ज ! कधं ण रोइस्सं ? यदो दाव तादो अज्जाए सह त्थविरभावं जाणिअ अदूरजादणिव्वेदो कुडुंबभारुव्वहणजोग्गो दाणीं (ण) तुमं त्ति हिअए वितक्किअ तवोवणं गदो (२) ।

(१) आर्य्य ! इयमस्मि मन्दभाग्या । आज्ञापयतु आर्य्यपुत्रः, को नियोगोऽनुष्ठीयतामिति ।

(२) आर्य्य ! कथं न रोदिष्यामि ? यतस्तावत् तात आर्य्यया सह स्थविरभावं ज्ञात्वा अदूरजातनिर्वेदः कुटुम्बभारोद्वहनयोग्यम् इदानीं त्वमिति हृदये वितर्क्य तपोवनं गतः ।

अभीष्टलाभस्य, पदं स्थानं, ("पदं शब्दे च वाक्ये च व्यवसायप्रदेशयोः । पादतच्चिह्नयोः स्थानत्राणयोरङ्कवस्तुनोः ॥" इति मेदिनी) हेतुरिति यावत्, मम भाग्योपचयात् भाग्याधिक्यात्, अयं सर्वः गुणानां गणः समुदितः सम्यक्त्वेन उदितः उपस्थितः, एकत्र मिलित इत्यर्थः, किं पुनः, वक्तव्यम् इति शेषः । [अत्र पद-शब्देन वाञ्छितफलप्राप्तौ श्रीहर्षादीनां हेतुत्वस्य वाच्यतया व्यञ्जनाभावाच्च काव्यलिङ्गालङ्कारः, परन्तु वाञ्छितफलप्राप्तौ एकस्मिन् निपुणकवि-श्रीहर्षरूपे कारणे सत्यपि गुणग्राहिपरिषदादीनां हेत्वन्तराणामुपादानात् समुच्चयालङ्कारः,—"समुच्चयोऽयमेकस्मिन् सति कार्य्यस्य साधके । खले कपोतिकान्यायात् तत्करः स्यात् परोऽपि चेत् ॥" इत्यादि लक्षणात् । ] शार्दूलविक्रीडितं वृत्तम् ॥ ३ ॥

(ङ) आर्य्ये मान्ये ! "वाच्यो नटीसूत्रधारावार्य्यनाम्ना परस्परम्" इति दर्पणोक्तेः ।

(ढ) सास्रं सवाष्पम् ।

(ण) तातः श्वशुर इति यावत् । आर्य्यया श्वश्र्वा । स्थविरभावं वार्द्धक्यम् ।

सूत्रधारः। [सनिर्वेदम्] (त) अये! कथं मां परित्यज्य तपोवनं यातौ पितरौ!! तत् किमिदानीं युज्यते? [विचिन्त्य] अथवा कथमहं गुरुचरण-परिचर्य्या-सुखं परित्यज्य गृहे तिष्ठामि? कुतः?—

विधातुं पितृशुश्रूषां त्यक्त्वैश्वर्य्यं क्रमागतम्।
वनं याम्यहमप्येष यथा जीमूतवाहनः॥ ४॥

[इति निष्क्रान्तौ। प्रस्तावना (थ)]

---

ततः प्रविशति नायको विदूषकश्च। (द)

नायकः। [सनिर्वेदम्] वयस्य आत्रेय!—

अदूरेति।—अदूरं समीपं यथा तथा, जातो निर्वेदः संसारं प्रति वीतरागत्वं यस्य तथोक्तः। कुटुम्बेति।—कुटुम्बानां पोष्यवर्गाणां, भारोद्वहने योगक्षेमविधाने, समर्थः क्षम इत्यर्थः। एतेन नाटकस्यास्य बीजं प्रदर्शितम्।

(त) सनिर्वेदं सवैराग्यम्। ("निर्वेदः स्वावमाननम्" इत्यमरः)।

"सूच्येद्वस्तुबीजं वा मुखं पात्रमथापि वा" इत्यादि दर्पणोक्तेः पात्रमेव निर्दिशन् सूत्रधार आह, विधातुमिति।—अहमप्येष क्रमागतं पैतृकम्, ऐश्वर्य्यं सम्पदमित्यर्थः, त्यक्त्वा पित्रोः [एकशेषः] जनन्याः जनकस्य च, शुश्रूषां सेवां, विधातुं कर्त्तुं, जीमूतवाहनो यथा इवेत्यर्थः, वनं यामि गच्छामि। [अत्र श्रौती उपमा, प्राचीनमतेन यथोपमा] पथ्यावक्त्रं वृत्तम्॥ ४॥

(थ) प्रस्तावना।—प्रस्ताव्यते सूच्यते प्रस्तुतमनयेति तथोक्ता, [प्रपूर्वात् स्तौतेर्ण्यन्तात् भावे अन-प्रत्ययः] तल्लक्षणमुक्तं दर्पणे—"नटी विदूषको वाऽपि पारिपार्श्विक एव वा। सूत्रधारेण सहिताः संलापं यत्र कुर्वते॥ चित्रैर्वाक्यैः स्वकार्य्योत्थैः प्रस्तुताक्षेपिभिर्मिथः। आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनाऽपि सा॥" इति। अत्र अवलगिताऽभिधा प्रस्तावना, तल्लक्षणं यथा दर्पणे—"यत्रैकत्र समावेशात् कार्य्यमन्यत् प्रसाध्यते। प्रयोगे खलु तज्ज्ञेयं नाम्नाऽवलगितं बुधैः॥" इति।

(द) नायकः रसोद्गमकः इत्यर्थः ; तल्लक्षणं यथा दर्पणे—"त्यागी कृती कुलीनः सुश्रीको रूपयौवनोत्साही। दक्षोऽनुरक्तलोकस्तेजोवैदग्ध्यशीलवान्नेता॥" इति। विदूषकः शृङ्गारसहायो नाटकीयपात्रविशेषः ; तल्लक्षणं यथा दर्पणे—"कुसुम-

रागस्यास्पदमित्यवैमि न हि मे ध्वंसीति न प्रत्ययः
कृत्याकृत्यविचारणासु विमुखं को वा न वेत्ति क्षितौ ?।
एवं निन्द्यमपीदमीप्सितफलप्राप्त्यै भवेत् यौवनं
भक्त्या याति यदीत्थमेव पितरौ शुश्रूषमाणस्य मे ॥ ५ ॥

विदूषकः। [सरोषम्] भो वअस्स! णं णिव्विण्णो एव्व तुमं एत्तिअं कालं एदाणं जीवंतमुआणं कदे इमं ईदिसं वणवासदुक्खं अणुहवंतो, ता पसीद दाणिं पि दाव, गुरुचरणसुस्सूसाणिव्वंधादो (४) णिअत्तिअ इच्छापरिभोअरमणिज्जं रज्जसुहं अणुहवीअदु (३)।

(३) भो वयस्य! ननु निर्विण्ण एव त्वमेतावन्तं कालम् एतयोर्जीवन्मृतयोः

वसन्ताद्यभिधः कर्मवपुर्वेषभाषाद्यैः। हास्यकरः कलहरतिर्विदूषकः स्यात् स्वकर्मज्ञः॥" इति।

कुमार्गप्रवर्त्तकेन विनश्वरेण यौवनेन शुभवाञ्छितफलप्राप्तिरेव श्रेयसीत्याह, रागस्येति।—यौवनं रागस्य विषयवासनायाः, आस्पदम् आ सम्यक् पदम् आस्पदम् ["आस्पदं प्रतिष्ठायाम्" (६।१।१४६ पा०) इति निपातनात् सुट्] स्थानम्, इति अवैमि जानामि, ध्वंसि विनश्वरम्, इति मे प्रत्ययः न हि इति न, अपि तु यौवनं क्षणभङ्गुरमेवेति जानामीत्यर्थः, ("सम्भाव्यनिषेधनिवर्त्तने द्वौ प्रतिषेधौ" इति वामनः) क्षितौ पृथिव्यां, को वा जनः कृत्याकृत्यविचारणासु कर्त्तव्याकर्त्तव्यावधारणेषु, विमुखम् असमर्थमिति भावः, यौवनमित्यनेनान्वयः, न वेत्ति ? न जानाति ? सर्व एव यौवनं तथाभूतं वेत्तीत्यर्थः, एवं निन्द्यमपि इदं यौवनं यदि इत्थम् अनेन प्रकारेण, भक्त्या पितरौ शुश्रूषमाणस्य [श्रुधातोः सन्नन्तस्यात्मनेपदित्वात् शानच्-प्रत्ययः] सेवमानस्य, मे मम, याति गच्छति, अतिक्रामतीति यावत्, तदा ईप्सितफलप्राप्त्यै अभीष्टलाभाय, भवेत्, [आप् धातोः सन्नन्तात् स्त्रीप्रत्ययः]; मन्दमपि वस्तु शुभकर्मणि व्याप्रियमाणं शुभफलदं भवतीति भावः। [अत्र हि निन्द्यवस्तुना यौवनेन मातापितृसपर्य्यासाधनं यदि लभ्यते, तदेव तस्य साफल्यम् इति कथनेन "अन्यथा न" इत्यर्थस्य प्रतीयमानतया प्रतीयमानव्यपोह्या प्रश्नपूर्विका परिसङ्ख्याऽलङ्कारः; तल्लक्षणं यथा दर्पणे—"प्रश्नादप्रश्नतो वाऽपि कथिताद्वस्तुनो भवेत्। तादृगन्यव्यपोहश्चेत् शाब्द आर्थोऽथवा भवेत्॥ परिसङ्ख्या—" इति। शार्दूलविक्रीडितं वृत्तम् ॥ ५ ॥

(४) निर्विण्णः वैराग्यवान्, अनासक्त इत्यर्थः। जीवन्मृतयोः जीवतोरपि मृत-

नायकः। वयस्य ! न सम्यगभिहितं त्वया। कुतः ?—

तिष्ठन् भाति पितुः पुरो भुवि यथा, सिंहासने किं तथा ?
यत् संवाहयतः सुखं तु चरणौ तातस्य, किं राजके ?।
किं भुक्ते भुवनत्रये धृतिरसौ, भुक्तोज्झिते या गुरोः ?
आयासः खलु राज्यम् उज्झितगुरोस्तत्रास्ति कश्चिद्गुणः ? ॥ ६ ॥

विदूषकः। [आत्मगतम्] अह्मो से गुरुअणसुस्सूसाणुराओ !!। [विचिन्त्य] भोदु, ता एदं पि दाव अण्णं विअ भणिस्सं। [प्रकाशं] भो वअस्स ! ण क्खु अहं रज्जसोक्खं ज्जेव (केवलं) उद्दिसिअ एव्वं भणामि, अण्णं पि दे करणीज्जं अत्थि ज्जेव (४)।

इति इदमीदृशं वनवासदुःखमनुभवन्, तत् प्रसीद इदानीमपि तावत्, गुरुचरणशुश्रूषानिर्बन्धात् निवृत्य इच्छापरिभोगरमणीयं राज्यसुखम् अनुभूयताम्।

(४) अहो अस्य गुरुजनशुश्रूषाऽनुरागः !!। भवतु, तदेतदपि तावत् अन्यदिव भणिष्यामि। भो वयस्य ! न खल्वहं राज्यसुखमेव (केवलम्) उद्दिश्य एवं भणामि, अन्यदपि ते करणीयमस्त्येव।

प्रार्थयोरित्यर्थः, पित्रोरिति शेषः, अतिवृद्धत्वात् आसन्नमरणयोः पार्थिवसुखपरित्यागादिति भावः। गुरुचरणेति।—गुर्वोः पित्रोः, चरणशुश्रूषाया यः निर्बन्धः आग्रहातिशयः, आदर इति यावत्, तस्मात्।

मातापित्रोश्चरणसेवैव पुत्राणां भक्तिमतामवश्यकर्त्तव्येत्याह, तिष्ठन्निति।—पितुः जनकस्य, पुरः अग्रतः भुवि भूतले, तिष्ठन् यथा भाति राजते, अहम् इति शेषः, सिंहासने तिष्ठन् तथा किं भाति ? नैव भातीत्यर्थः। तातस्य चरणौ संवाहयतः मर्दयतः, सेवमानस्य इत्यर्थः, मम यत् सुखं, भवतीति शेषः, राजके राज्यभोगे इत्यर्थः, तथा किम् ? नैव तादृशं सुखमित्यर्थः। गुरोः पितुः, भुक्तोज्झिते भक्षितावशिष्टे, भुक्ते अशिते, सतीति शेषः, या धृतिः सन्तोषः, भवतीति शेषः, भुवनत्रये भुक्ते उपभुक्ते, असौ धृतिः, किम् ? त्रिभुवनभोगेऽपि तादृशी धृतिर्नास्तीत्यर्थः। उज्झितः त्यक्तः, गुरुर्येन तथोक्तस्य गुरुत्यागिनः, गुरुसेवात्यागिन इत्यर्थः, राज्यम् आयासः खलु क्लेश एवेत्यर्थः, तत्र राज्ये, कश्चित् गुणः सुखमिति

नायकः । [ सस्मितम् ] (न) वयस्य ! ननु कृतमेव यत् करणीयम् । पश्य—

न्याय्ये वर्त्मनि योजिताः प्रकृतयः, सन्तः सुखं स्थापिता
नीतो बन्धुजनस्तथाऽऽत्मसमतां, राज्ये च रक्षा कृता ।
दत्तो दत्तमनोरथाधिकफलः कल्पद्रुमोऽप्यर्थिने
किं कर्त्तव्यमतःपरं, कथय वा यत्ते स्थितं चेतसि ? ॥ ७ ॥

विदूषकः । भो वअस्स ! अच्चंतसाहसिओ मदंगहदओ

---

याचते, अस्ति ? नास्त्येवेत्यर्थः; अत्र काकुरिति बोध्यम् । [ अत्र हि उपमानभूतेभ्यः सिंहासनावस्थानादिभ्यः उपमेयभूतानां पितृसमीपावस्थानादीनामाधिक्यकथनात् व्यतिरेकालङ्कारः; तल्लक्षणं यथा दर्पणे—"आधिक्यमुपमेयस्योपमानान्न्यूनताऽथवा । व्यतिरेक एक उक्तेऽनुक्ते हेतौ पुनस्त्रिधा ॥" इति । तथा अत्रापि नैव भातीत्याद्यर्थस्य प्रतीयमानतया प्रतीयमानव्यपोह्या अप्रश्नपूर्विका परिसङ्ख्याऽलङ्कारः इत्यनयोः सङ्करः । एवं भुक्ते इति पदात् भोजनोपभोगरूपार्थद्वयप्रतिपादनाच्छ्लेषोऽपि । अस्मिन् श्लोके प्रथमे पादे "तिष्ठन् जनः" इति प्रथमान्तनिर्देशः, द्वितीयादिषु "जनस्य सुखम्" इत्यादि भावनिर्देशः, तेन प्रक्रमभङ्गदोषः ]। शार्दूलविक्रीडितं वृत्तम् ॥ ६ ॥

(न) स्मितम् उत्तमव्यक्तीनां हास्यविशेषः, "ज्येष्ठानां स्मितहसिते" इति दर्पणोक्तेः; तल्लक्षणन्तु तत्रैव—"ईषद्विकासिनयनं स्मितं स्यात् स्पन्दिताधरम्" इति । [ तेन सह इति बहुव्रीहिः, क्रियाविशेषणञ्च ]।

पुरुषमात्रस्य विशेषतो नरपतेर्यत् करणीयं तत् सर्वमेव मया कृतमित्याह, न्याय्ये इति ।—प्रकृतयः अमात्यादयः, न्याय्ये न्यायादनपेते, ["धर्मपथ्यर्थन्यायादनपेते" (४।४।९२ पा०) इति यत्प्रत्ययः ] वर्त्मनि पथि योजिताः नियोजिता इत्यर्थः, मयेति सर्वत्र अध्याहर्त्तव्यम् । सन्तः साधवः, सुखं यथा तथा स्थापिताः, तथा एवं, बन्धुजनः आत्मसमतां स्वतुल्यतां, नीतः प्रापितः, स्वसमानः कृत इत्यर्थः, राज्ये च रक्षा कृता राज्यरक्षणमपि कृतमित्यर्थः, दत्तं मनोरथादपि अधिकं फलं येन तथाभूतः, कल्पद्रुमः अपि अर्थिने याचकाय, दत्तः, यस्मात् सर्वाण्येव अमूल्यवस्तून्यपि लभ्यन्ते स कल्पद्रुमोऽपि मया प्रदत्तः, अतो नादेयं किमपि ममास्तीति भावः; एतेन दानवीरत्वमस्य सूचितम्; अतः परं किं वा किमपरमित्यर्थः, कर्त्तव्यम् ? ममेति शेषः, ते तव, चेतसि मनसि, यत् स्थितं तत् कथय । शार्दूलविक्रीडितं वृत्तम् ॥ ७ ॥

दे पड़िवक्खो, तस्सिं अ समासण्णट्ठिदे दे पधाणामच्चसमधिट्ठिदं पि ण तुए विणा रज्जं सुत्थिरं (प) त्ति पड़िभादि (५)।

नायकः। धिङ्मूर्ख! मतङ्गो राज्यं हरिष्यतीति शङ्कसे?

विदूषकः। अध इं। (६)

नायकः। यद्येवं, तत् किं न स्यात्? ननु स्वशरीरात् प्रभृति सर्वं परार्थमेव मया परिपाल्यते। यत्तु स्वयं न दीयते, तत् तातानुरोधात्; तत् किमनेनावस्तुना चिन्तितेन? वरं ताताज्ञैवानुष्ठिता; आज्ञापितश्चास्मि तातेन, यथा—"वत्स जीमूतवाहन! बहुदिवसपरिभोगेण स्वीकृतसमित्कुशकुसुमम् उपभुक्तमूलफलकन्दनीवारप्रायमिदं स्थानं वर्त्तते; तदितो मलयपर्वतं गत्वा किञ्चित् तस्मिन् निवासयोग्यमाश्रमपदं निरूपय" इति। (फ) तदेहि, मलयपर्वतमेव गच्छावः।

विदूषकः। जं भवं आणवेदि। एदु भवं (७)।

[इति उभौ परिक्रामतः]।

---

(५) भो वयस्य! अत्यन्तसाहसिको मतङ्गहतकस्ते प्रतिपक्षः। तस्मिंश्च समासन्नस्थिते ते प्रधानामात्यसमधिष्ठितमपि न त्वया विना राज्यं सुस्थिरमिति प्रतिभाति।

(६) अथ किम्।

(७) यत् भवानाज्ञापयति। एतु भवान्।

---

(प) अत्यन्तसाहसिकः अतिदुर्दान्तः। प्रतिपक्षः शत्रुः। समासन्नस्थिते सन्निहिते। प्रधानामात्यसमधिष्ठितं मुख्यमन्त्रिभिः रक्षितम्। सुस्थिरं निर्विघ्नेन स्थितम्।

(फ) यद्येवं—यदि एवं मतङ्गेन मे राज्यं हृतं, तत् तदा, किं न स्यात्? सर्वमेवाभीष्टं सफलं स्यादिति भावः। ननु यतः। न दीयते, राज्यमिति शेषः। अवस्तुना असारेण। ताताज्ञैव पितुरादेश एव, अनुष्ठिता प्रतिपालिता, वरं मनाक् प्रियेत्यर्थः, अपरस्य असारस्य वस्तुनश्चिन्तनात् पितुरादेशपालनचिन्तनं श्रेष्ठमित्यर्थः। बहुदिवसपरिभोगेण दीर्घकालव्यवहारेण। स्वीकृतेति।—स्वीकृतानि गृहीतानि, समित्कुशकुसुमानि यस्मात् तथोक्तम्। उपभुक्तेति।—उपभुक्ताः मूलफलकन्दनीवाराः

विदूषकः। [ अग्रतोऽवलोक्य ] भो वअस्स ! पेक्ख पेक्ख, एसो क्खु सरसघणचंदणवणुच्छंगपरिमिलणलग्गबहुल-परिमलो विमलतडणिवडणज्जरिज्जंतणिज्झरुच्छलितसिसिर-सीअरासारवाही पढमसंगमोक्कंठिदपिआकंठग्गहो विअ मग्गपरिस्समं अवणअंतो रोमंचेदि पिअवअस्सं मलअ-मारुदो (८)। (ख)

नायकः। [ निरूप्य सविस्मयम् ] अये ! प्राप्ता एव वयं मलयपर्वतम्। [ समन्तादवलोक्य ] अहो रामणीयकमस्य !! तथा हि—

---

(८) भो वयस्य ! प्रेक्षस्व प्रेक्षस्व। एष खलु सरसघनचन्दनवनोत्सङ्गपरि-मिलनलग्नबहुलपरिमलो विमलतटनिपतनजर्जरायमाणनिर्झरोच्छलितशिशिरशीकरा-सारवाही प्रथमसङ्गमोत्कण्ठितप्रियाकण्ठग्रह इव मार्गपरिश्रममपनयन् रोमाञ्चयति प्रियवयस्यं मलयमारुतः।

---

प्रायेण बाहुल्येन यस्मात् तथाभूतम् ; यद्वा—उपभुक्तं मृगादीनां प्रायो बहुलांशं यस्मात् तथाभूतम्। निरूप्य निर्णीय, अन्विष्य इत्यर्थः।

(ख) सरसेति।—सरसं स्निग्धं, घनं निविडं, यत् चन्दनवनं तस्य उत्सङ्गे क्रोडे, परिमिलनेन सम्पर्केण, लग्नः सञ्जातः, बहुलः प्रभूतः, परिमलः गन्धः यस्य तथा-भूतः ; एतेन सौगन्ध्यमस्य सूचितम्। विमलेति।—विमले निर्मले, तटे निपतनेन जर्जरायमाणः चूर्णतामापद्यमानः, यः निर्झरः पर्वतोपरितटात् पतद्वारिसङ्घातः, तस्मात् उच्छलितः समन्तात् विक्षिप्तः, यः शिशिरः शीतलः, शीकराणां जलकणानाम्, आसारः धारासम्पातः, तद्वाही तद्वाहीत्यर्थः ; एतेन शैत्यं प्रकटितम्। मलयमारुतः दक्षिणानिलः ; अत्र मलयेति विशेषणेन मान्द्यं प्रकाशितम्। प्रथमेति।—प्रथमो यः सङ्गमः तस्मिन् उत्कण्ठितायाः उत्सुकायाः, प्रियायाः कण्ठग्रह इव कण्ठाश्लेष इव। मार्गपरिश्रमम् अध्वपर्यटनक्लान्तिम्। अपनयन् हरन्। प्रियवयस्यं त्वामित्यर्थः। रोमाञ्चयति रोमाञ्चवन्तं करोति, उद्बोधयतीति भावः। ["तत् करोति" (ग०) इत्यर्थे णिच्, ततो मतुपो लुक्]। दूरदेशादागतस्य प्रथमसङ्गमकाले हि नानासुगन्धद्रव्यसंस्कृतायाः प्रियायाः सात्त्विकभावोदयात् उद्गतघर्मवारिणा शीतलीकृतदेहस्य नायकस्य अध्वश्रमो नश्यतीति प्रसिद्धं, तेनेयमुत्प्रेक्षा।

माद्यद्दिग्गजगण्डभित्तिकषणैर्भग्नस्रवच्चन्दनः
क्रन्दत्कन्दरगह्वरो जलनिधेरास्फालितो वीचिभिः।
पादालक्तकरक्तमौक्तिकशिलः सिद्धाङ्गनानां गतै-
र्दृष्टोऽयं मलयाचलः किमपि मे चेतः करोत्युत्सुकम् ॥८॥

तदेहि, अत्रारुह्य वासयोग्यं किञ्चिदाश्रमपदं निरूपयावः।

विदूषकः। एव्वं करेम्ह। [अग्रतः स्थित्वा] एदु भवं। (९)

[आरोहणं नाटयतः।]

नायकः। [दक्षिणाक्षिस्पन्दनं सूचयन्] अये!—

दक्षिणं स्पन्दते चक्षुः फलाकाङ्क्षा न मे क्वचित्।
न च मिथ्या मुनिवचः कथयिष्यति किं न्विदम्? ॥ ९ ॥

(९) एवं कुर्मः। एतु भवान्।

माद्यदिति।—माद्यतां [दैवादिक मदधातोः शतरि दीर्घत्वम्] उन्मत्तीभूतानां, मदस्राविणामिति भावः, दिग्गजानां गण्डा एव भित्तयः तासां कषणैर्घर्षणैः, भग्नाः अत एव स्रवन्तः क्षरद्रसाः, चन्दनाः चन्दनतरवः यत्र तथाभूतः; मलयपर्वते हि चन्दनवृक्षा जायन्ते इति प्रसिद्धिः; जलानि निधीयन्ते अस्मिन् इति जलनिधिः [उपसर्गात् धातोरधिकरणे कि-प्रत्ययः। "रत्नाकरो जलनिधिः" इति समुद्रपर्य्याये अमरः] तस्य जलनिधेः समुद्रस्य, वीचिभिस्तरङ्गैः, आस्फालितः आहतः, अत एव क्रन्दन्ति ध्वनन्ति, कन्दरा दर्य्य एव, गह्वराणि विलानि यस्य तथोक्तः; तथा सिद्धाङ्गनानां सिद्धाख्यदेवयोनिविशेषनारीणां, गतैः गमनैः, पादालक्तकेन रक्ता मौक्तिकशिलाः मुक्तामयप्रस्तरा यत्र तथाविधः, एतैर्विशेषणैरस्य पर्वतस्य अतीव रमणीयत्वं व्यज्यते ] अयं मलयाचलः दृष्टः सन् मे मम, चेतः किमपि अनिर्वचनीयं यथा तथा, उत्सुकम् उत्कण्ठितं, करोति, दर्शनार्थमुत्कण्ठां वर्द्धयतीत्यर्थः। [स्वरूपवर्णनात् स्वभावोक्तिः; किञ्च उत्सुकत्वजनकहेतूनां वाक्य-पदार्थगतत्वात् काव्यलिङ्गमपि, अतः सङ्करः]। शार्दूल-विक्रीडितं वृत्तम् ॥ ८ ॥

दक्षिणमिति।—मे मम, दक्षिणं चक्षुः तदपाङ्गदेश इत्यर्थः, स्पन्दते स्फुरति, क्वचित् फलस्य दक्षिणाक्षिस्पन्दनजन्यस्य शुभस्य स्त्रीलाभरूपस्य इत्यर्थः, आकाङ्क्षा अभिलाषः, न, अस्तीति शेषः; मुनिवचः मुनेः शकुनशास्त्रकारस्य, वचः दक्षिणाक्षि-स्पन्देन शुभस्त्रीलाभरूपफलसूचकवचनमित्यर्थः, न च मिथ्या असत्यमभावीत्यर्थः, अतः

विदूषकः। भो वअस्स! अवस्समासण्णं (भ) दे पिअं णिवेदेदि। (१०)

नायकः। एवं नाम (म) यथाऽऽह भवान्।

विदूषकः। [विलोक्य] भो वअस्स! पेक्ख पेक्ख। एदं क्खु सविसेसघणसिणिद्धपादवविसोहिअं सुरहिहविग्गंधगब्भिणुद्दामधूमणिग्गमं अणुव्विग्गसुहणिसण्णसावदगणं तवोवणं (य) विअ लक्खीअदि। (११)

नायकः। सम्यगुपलक्षितम्। तपोवनमेवैतत्। कुतः?—

वासोऽर्थं दययैव नातिपृथवः कृत्तास्तरूणां त्वचो
भग्नाऽऽलक्ष्यजरत्कमण्डलु ततः स्वच्छं पयो नैर्झरम्।

---

(१०) भो वयस्य! अवश्यमासन्नं ते प्रियं निवेदयति।

(११) भो वयस्य! प्रेक्षस्व प्रेक्षस्व। एतत् खलु सविशेषघनस्निग्धपादपविशोभितं सुरभिहविर्गन्धगर्भितोद्दामधूमनिर्गमम् अनुद्विग्नसुखनिषण्णश्वापदगणं तपोवनमिव लक्ष्यते।

(भ) आसन्नं समीपवर्त्ति।

(म) एवं नामेति।—एवम् आसन्नप्रियं, नाम सम्भावनायां, सम्भाव्यते इत्यर्थः, सुनिमित्तसूचनादिति भावः।

(य) सविशेषेति।—सविशेषम् अत्यन्तं, घनैः स्निग्धैः पादपैः तरुभिः, विशोभितं विशेषेणालङ्कृतं, तथा सुरभिः घ्राणसुखकरः ("सुरभिर्घ्राणतर्पणः" इत्यमरः) हविर्गन्धो गर्भे जातोऽस्य [तारकादित्वादितच्] तादृशः, उद्दामः उत्कटः, धूमस्य निर्गमो यस्मात् तथाभूतं, तथा अनुद्विग्नाः हिंसाद्यभावादुद्वेगरहिताः, अत एव सुखनिषण्णाः सुखेनावस्थिताः, श्वापदगणाः यस्मिन् तथोक्तम्। तपःप्रधानं वनं तपोवनम्।

तपोवनावधारणहेतुमाह, वासोऽर्थमिति।—वासोऽर्थं परिधानार्थं, न त्वन्येन प्रयोजनेनेति भावः, दययैव कृपालुतयैव, अतिस्थूलवल्कलच्छेदने तरूणां व्यथा भवेदिति खेदेनैव इति भावः, नातिपृथवः नातिस्थूलाः, तरूणां त्वचः वल्कलानि, कृत्ताः छिन्नाः, भग्नाऽपि आलक्ष्यः सम्यग्दृश्यः, जरन् जीर्णतामापद्यमानः, कमण्डलुः

दृश्यन्ते त्रुटितोज्झिताश्च बटुभिर्मौञ्ज्यः क्वचिन्मेखला
नित्याकर्णनतया शुकेन च पदं साम्नामिदं पठ्यते ॥ १० ॥

तदेहि प्रविश्य अवलोकयावः । [प्रवेशं नाटयतः । सविस्मयं विलोक्य] अहो ! नु खलु मुदितमुनिजनप्रविचार्य्यमाणसन्दिग्धवेदवाक्यविस्तरस्य पठद्बटुच्छिद्यमानार्द्रार्द्रसमिधस्तापसकुमारिकाऽऽपूर्य्यमाणबालवृक्षालवालस्य प्रशान्तरमणीयता (२) तपोवनस्य । इह हि—

मधुरमिव वदन्तः स्वागतं भृङ्गशब्दै-
र्नतिमिव फलनम्रैः कुर्वतेऽमी शिरोभिः ।

जलपात्रविशेषः यस्मिन् तत्, ("कमण्डलुरङ्कः" इति क्वाचित्कः पाठो न साधीयान् ।) ततः स्वच्छं मुनिमण्डलम्, आविलत्वे तथा कमण्डलुदर्शनं न सम्भवतीति भावः, नैर्झरं पयः निर्झरोदकम् ; तथा क्वचित् प्रदेशे बटुभिः ब्रह्मचारिबालकैः, आदौ त्रुटिताः छिन्नाः, पश्चात् उज्झिताः त्यक्ताः, [अत्र स्नातानुलिप्तवत् पूर्वकालस्यापरकालेन कर्मधारयः] मौञ्ज्यः मुञ्जतृणनिर्मिताः, मेखलाः काञ्चीदामानि दृश्यन्ते, तथा नित्याकर्णनतया नित्यश्रवणेन हेतुना, शुकेन पक्षिविशेषेण, साम्नां सामवेदानाम्, इदं श्रूयमाणं, पदं पठ्यते । [अत्र स्वरूपवर्णनात् स्वभावोक्तिरलङ्कारः एवं दयथैव इत्युत्प्रेक्षालङ्कार इत्यनयोः संसृष्टिः]। शार्दूलविक्रीडितं वृत्तम् ॥ १० ॥

---

(२) मुदितेति ।—मुदितैः हृष्टैः, मुनिजनैः प्रकर्षेण विचार्य्यमाणो मीमांस्यमानः, सन्दिग्धः सन्देहमापन्नः, वेदवाक्यानां विस्तरो यत्र तादृशस्य, ("विस्तारो विस्तृति व्यासः स तु शब्दस्य विस्तरः" इत्यमरः) पठद्भिः बटुभिः छिद्यमानाः आर्द्रार्द्राः अतिसरसाः [वीप्सायां द्विः] समिधः यज्ञकाष्ठानि यत्र तथाभूतस्य, तथा तापसकुमारिकाभिः तपस्विकन्यकाभिः, आपूर्य्यमाणाः जलैः सम्भ्रियमाणाः, बालवृक्षाणाम् आलवालाः [आलवानि सिक्तजलानि आलान्ति गृह्णन्ति ये ते] वृक्षमूलप्रदेशे पदत्तजलधारणार्थं वर्त्तुलाकारा भूमिविशेषा यत्र तथाभूतस्य । प्रशान्तञ्च तत् रमणीयञ्चेति तस्य भावः, स्निग्धमनोहरत्वमित्यर्थः । [स्वभावोक्तिः अलङ्कारः]।

तदेव द्रढयति, मधुरमिति ।—शाखिनोऽपि तरवोऽपि, कथम् अतिथिसपर्य्याम् अतिथिपूजां शिक्षिताः ? तापसजनैरिति शेषः । तथाहि, अमी शाखिनः, भृङ्गाणां

मम ददत इवार्घ्यं पुष्पवृष्टिं किरन्तः
कथमतिथिसपर्य्यां शिक्षिताः शाखिनोऽपि ॥११॥

तन्निवासयोग्यमिदं तपोवनम्। मन्ये भविष्यतीह वसतामस्माकं निर्वृतिः। (ख)

विदूषकः। भो वअस्स ! किं क्खु एदे ईसिवलिअकंधरा णिच्चलमुहावसरंतदरदलिअदब्भकवला समुण्णमिददिक्कैककण्णा सुहणिमीलिदलोअणा आअसंता विअ (ग) हरिणा लक्खीअंति। (१२)

(१२) भो वयस्य ! किं खल्वेते ईषद्वलितकन्धरा निश्चलमुखापसरद्दर-दलितदर्भकवलाः समुन्नमितदत्तैककर्णाः सुखनिमीलितलोचना आकर्णयन्त इव हरिणा लक्ष्यन्ते।

भ्रमराणां, शब्दैः गुञ्जनैः, मधुरं सुमनोहरं, स्वागतं सुखेनागमनं, वदन्तः पृच्छन्तः इव, फलनम्रैः फलभारावनतैः, शिरोभिः नतिं प्रणामं कुर्वते इव प्रणमन्तीव, तथा पुष्पवृष्टिं किरन्तः पुष्पाणि विक्षिपन्तः इत्यर्थः, मम अर्घ्यं ददते इव। [ "कुर्वते ददते" इत्युभयत्र कर्त्रर्थक्रियाफलत्वादात्मनेपदम्। उत्प्रेक्षाऽलङ्कारः। तदुक्तं दर्पणे—"भवेत् सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मना" इति। मालिनी वृत्तम्। तल्लक्षणं यथा—"नयुगलय यकारो यो गणोऽन्त्य मकारो। वसुशरविरामा मालिनी चित्रवामा॥" इति ॥ ११ ॥

(ख) निर्वृतिः सन्तोषः, सुखमिति यावत्।

(ग) ईषदिति।—ईषत् किञ्चित्, वलिताः वक्रीकृताः, कन्धरा ग्रीवा यैः तथोक्ताः। निश्चलेति।—निश्चलेभ्यः स्थिरेभ्यः, रोमन्थनादिव्यापाररहितेभ्य इति भाव, मुखेभ्यः अपसरन्तः स्खलन्तः, दरदलिताः किञ्चित् खण्डिता ईषच्चर्विताः इति यावत्, दर्भकवलाः कुशाङ्कुरग्रासा येषां तथाभूताः। समुन्नमितेति।—समुन्नमितः दत्तश्च अवहित इति यावत्, एकः कर्णो यैः तादृशाः। तथा सुखेन निमीलिते लोचने यैः तथाविधाः। आकर्णयन्त इव शृण्वन्त इव, किमपीति शेषः।

नायकः। [कर्णं दत्त्वा] सखि! सम्यगुपलक्षितम्। तथाहि—

स्थानप्राप्तावधानं प्रकटितसमतामन्द्रतारव्यवस्था-

निर्ह्रादिन्या विपञ्च्या मिलितमलिरुतेनेव तन्त्रीस्वरेण।

एते दन्तान्तरालस्थिततृणकवलच्छेदशब्दं नियम्य

व्याजिह्माङ्गाः कुरङ्गाः स्फुटललितपदं गीतमाकर्णयन्ति ॥१२॥

विदूषकः। भो वअस्स! को उण एसो तवोवणे गाअदि ?(१३)

नायकः। यथैताः कोमलाङ्गुलितलाभिहन्यमानाः स्फुटं क्वणन्ति तन्त्र्यस्तथा काकलीप्रधानं गीयत इति तर्कयामि, [अङ्गुल्यग्रेणायतनं निर्दिशन्] अस्मिन्नायतने देवतामाराधयन्ती काचिद्दिव्या योषिदुपवीणयति। (अ)

---

(१३) भो वयस्य! कः पुनरेष तपोवने गायति ?

---

तदेव प्रकटयति, स्थानेति।—एते कुरङ्गाः हरिणाः, व्याजिह्मानि चलीवाऽलसानि, अङ्गानि येषां तथोक्ताः, निश्चला इति भावः, ("जिह्मस्तु कुटिलेऽलसे" इत्यमरः) दन्तानाम् अन्तरालेषु मध्यस्थलेषु स्थिता ये तृणकवलाः तेषां छेदशब्द चर्वणध्वनिं, नियम्य संयमयित्वा, एकाग्रचित्तत्वात् इति भावः, प्रकटिता आविष्कृता, समतया साम्येन, या मन्द्रतारव्यवस्था गम्भीरोच्चव्यवस्थानं, तया निर्ह्रादिन्या निर्ह्रादः शब्दः, "स्वाननिर्घोषनिर्ह्रादनादनिस्वाननिस्वनाः" इत्यमरः) सः अस्याः अस्तीति निर्ह्रादिनी [अस्त्यर्थे इनप्रत्ययः] तस्याः सुस्वरं शब्दितायाः, विपञ्चयति विस्तारयति शब्दमिति [विपूर्वात् "पचि विस्तारे" इत्यस्मात् चौरादिकण्यन्तधातोरच्, ततः गौरादित्वात् ङीष् प्रत्ययः] विपञ्ची तस्याः वीणायाः, ("वीणा तु वल्लकी विपञ्ची" इत्यमरः) तन्त्रीस्वरेण अलिरुतेनेव भ्रमरगुञ्जितेनेव, मिलितं सङ्गतं, तथा स्फुटानि सुव्यक्तानि, ललितानि मनोहराणि, पदानि सुप्तिङन्तरूपाणि यस्य यस्मिन् वा तादृशं, गीतं स्थाने यथायोग्ये इति भावः, प्राप्तम् अवधानं यत्र तादृशं यथा स्यात् तथा ["स्थान-प्राप्त्या दधानम्" इति पाठे स एवार्थः।] आकर्णयन्ति शृण्वन्ति। [अत्र स्वभावोक्तिरलङ्कारः, "अलिरुतेनेव" इत्युपमा च तदनयोः संसृष्टिः]। स्रग्धरा वृत्तम्,—"म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्" इति लक्षणात् ॥ १२ ॥

(अ) कोमलेति।—कोमलेन मृदुलेन, अङ्गुलितलेन अभिहन्यमानाः

विदूषकः। भो वअस्स! एहि अह्मेवि देवदाअदणं पेक्खह्म। (१४)

नायकः। वयस्य! साधूक्तं खलु भवता। वन्द्याः खलु देवताः। [उपसर्पन् दृष्ट्वा स्थित्वा] वयस्य! कदाचित् द्रष्टुमनर्होऽयं जनो भवति। तदावां तमालगुल्मान्तरितौ पश्यन्तावबसरं प्रतिपालयावः (ख)। [तथा कुरुतः]।

[ततः प्रविशति भूमावुपविष्टा वीणां वादयन्ती मलयवती चेटी च।]

नायिका। (गायति)—

उत्फुल्लकमलकेसरपरागगौरद्युते! मम हि गौरि!।
अभिवाञ्छितं प्रसिध्यतु भगवति! युष्मत्प्रसादेन॥ १२॥

(१४) भो वयस्य! एहि आवामपि देवतायतनं प्रेक्षावहे।

ताड्यमानाः। क्वणन्ति स्वनन्ति। काकलीप्रधानमिति।—काकली सूक्ष्मः मधुरास्फुटः स्वनः, प्रधानं यत्र तत् यथा तथा, ("काकली तु कले सूक्ष्मे ध्वनौ तु मधुरास्फुटे" इत्यमरः)। आयतने उपासनामन्दिरे। दिवि भवा दिव्या स्वर्गीया [दिव्-शब्दात् "तत्र भवः" (४।३।५३ पा०) इति यत्प्रत्ययः, ततः स्त्रियां टाप्], योषित् स्त्री, उपवीणयति वीणया उपगायति, वीणावादनपुरःसरं गायतीत्यर्थः। [उपवीणाशब्दात् णिच् प्रत्ययः, ततः लट् प्रथमपुरुषैकवचनम्]।

(ख) उपसर्पन् समीपं गच्छन्। अनर्हः अयोग्यः। अयं जनः इयं रमणीत्यर्थः। तमालेति—तमालानां तदाख्यतरूणां, गुल्मेन निचयेन, विस्तारेणेत्यर्थः, अन्तरितौ आच्छादितशरीरौ, गोपितौ इत्यर्थः। पश्यन्तौ, इमां रमणीमिति शेषः। अवसरं समयं उपस्थितियोग्यसमयमिति यावत्, प्रतिपालयावः अपेक्षावहे।

यद्यपि भाषाविभागकथनावसरे दर्पणकारेण—"पुरुषाणामनीचानां संस्कृतं स्यात् कृतात्मनाम्। शौरसेनी प्रयोक्तव्या तादृशीनाञ्च योषिताम्। आसामेव तु गाथासु महाराष्ट्रीं प्रयोजयेत्॥" इति कथयता महाराष्ट्रीभाषयैव मलयवतीगाथाकथनं समीचीनमुक्तं, तथाऽपि दिव्ययोषित्त्वात् अनीचपुरुषाणामिव अनीचनारीणामपि संस्कृतभाषया कथनं समीचीनमिव मन्यन्ते नाटककाराः। अतः संस्कृतेनैव कथितव्याजेन

नायकः। [ कर्णं दत्त्वा ] वयस्य! अहो गीतम्! अहो वाद्यम् !! (स)—

व्यक्तिर्व्यञ्जनधातुना दशविधेनाप्यत्र लब्धाऽमुना
विस्पष्टो द्रुतमध्यलम्बितपरिच्छिन्नस्त्रिधाऽयं लयः।
गोपुच्छप्रमुखाः क्रमेण यतयस्तिस्रोऽपि सम्पादिता-
स्त्वातोद्यानुगताश्च वाद्यविधयः सम्यक् त्रयो दर्शिताः ॥१४॥

इङ्गितमाह, उत्फुल्लेति।—उत्फुल्लानां विकसितानां, ["उत्फुल्ल-संफुल्ल प्रफुल्लाः" (वा०) इति फलधातोः निष्ठाप्रत्ययेन निपातनसिद्धाः] कमलानां केसरेषु किञ्जल्केषु, यः परागः रजः, तद्वत् गौरी द्युतिः कान्तिर्यस्याः तादृशि! कनकप्रभे इत्यर्थः, भगवति गौरि! युष्मत्प्रसादेन भवदनुग्रहेण, मम अभिवाञ्छितम् अभिलषितम्, अभीष्टपतिलाभरूपमिति भावः, हि निश्चितं, प्रसिध्यतु सफलताम् एतु। [ लुप्तोपमा ]। आर्या वृत्तम्,—"लक्ष्मैतत् सप्त गणा गोपेता भवति नेह विषमे जः" इत्यादि तल्लक्षणम् ॥ १३ ॥

(स) अहो गीतम्—अहो आश्चर्यं, उत्तमं गीतम्, उत्तमं वाद्यञ्चेत्यर्थः।

व्यक्तिरिति।—दशविधेन दशप्रकारेणापि, अमुना श्रोत्रविषयीभूतेनेति भावः; व्यज्यन्ते स्वरा अनेनेति व्यञ्जनं तदेव धातुः सङ्गीतावयवविशेषः तेन, स्वरव्यञ्जकसङ्गीतावयवविशेषेणेत्यर्थः, व्यक्तिः स्वरप्रकाशनं, लब्धा प्राप्ता, अनुभूतेत्यर्थः। "दशविधेनाप्यन्नलब्धात्मना" इति क्वचित् पाठः। अत्र द्रुतं शीघ्रोच्चारितत्वं, मध्यं नातिशीघ्रमन्दोच्चारितत्वं, लम्बितं दीर्घोच्चारितत्वं, तैः परिच्छिन्नः विशेषितः, अत एव त्रिधा त्रिप्रकारेण त्रिविधः, लयः सङ्गीतवाद्यानामेकतानरूपं साम्यं, सङ्गीतव्यापारविश्रामः इत्यर्थः, ("तालः कालक्रियामानं लयः साम्यमथास्त्रियाम्" इत्यमरः) विस्पष्टः सम्यक् प्रकटतां गतः। गोपुच्छप्रमुखाः गोपुच्छप्रभृतयः, तिस्रोऽपि यतयः विच्छेदाः, क्रमेण यथाक्रमं, सम्पादिताः प्रकाशिताः। तु पुनः, त्रयः त्रिविधा इत्यर्थः, आतोद्यं वीणा, ("चतुर्विधमिदं वाद्यं वादित्राऽऽतोद्यनामकम्" इत्यमरोक्त्या आतोद्यशब्दोऽयं वीणावंशमृदङ्गकरतालरूपचतुर्विधवाद्यवाचकोऽपि अत्र केवलवीणार्थक एव ज्ञातव्यः, "वीणां वादयन्ती" इत्युक्तत्वात्) तदनुगताः तत्सङ्गताः, वाद्यविधयः वाद्यव्यापाराश्च, सम्यक् दर्शिताः प्रकटिताः। शार्दूलविक्रीडितं वृत्तम् ॥ १४ ॥

चेटी। [सप्रणयम्] भट्टिदारिए! चिरं क्खु वादअंतीए कुदो ण परिस्समो अग्गहत्थाणं? (१५) (छ)

नायिका। [साधिक्षेपम्] हञ्जे! (क) कुदो मे देईए पुरदो वीणं वादअंतीए अग्गहत्थाणं परिस्समो! (१६)

चेटी। भट्टिदारिए! णं भणामि किं एदाए णिक्करुणाए पुरदो वाइदेण? जा एत्तिअं कालं कण्णआजणदुक्करेहिं णिअमोववासणेहिं आराधअंतीए अज्जवि ण दे पसादं दंसेदि। (१७) (ख)

विदूषकः। कण्णआ क्खु एषा, किं ण पेक्खम्ह? (१८)

---

(१५) भर्तृदारिके! चिरं खलु वादयन्त्याः कुतो न परिश्रमोऽग्रहस्तयोः?

(१६) हञ्जे! कुतो मे देव्याः पुरतो वीणां वादयन्त्या अग्रहस्तयोः परिश्रमः।

(१७) भर्तृदारिके! ननु भणामि किमेतस्या निष्करुणायाः पुरतो वादितेन? या एतावन्तं कालं कन्यकाजनदुष्करैर्नियमोपवासैराराधयन्त्या अद्यापि न ते प्रसादं दर्शयति।

(१८) कन्यका खल्वेषा, किं न प्रेक्षावहे?

(छ) सप्रणयं सस्नेहम्। अग्रहस्तयोः हस्ताग्रभागयोरित्यर्थः [हस्तयोरग्रे अग्रहस्तौ, तयोः, राजदन्तादित्वात् समासः, यद्वा,—अग्रौ च तौ हस्तौ चेति अग्रहस्तौ, अवयवावयविनोरभेदात् कर्मधारयः, तयोः]।

(क) साधिक्षेपं सतिरस्कारम्। चेटीं प्रति राजकन्यायाः "हञ्जे" इत्यनेन सम्बोधनं नाटकप्रसिद्धं—"हलेति सदृशी, प्रेष्या हञ्जे" इति दर्पणात्।

(ख) निष्करुणायाः निष्ठुरायाः देव्या गौर्या इत्यर्थः, पुरतः सम्मुखे, वादितेन वीणावादनेन किम्? न प्रयोजनमित्यर्थः, या गौरी, एतावन्तं कालं सुचिरमित्यर्थः, [अत्यन्तसंयोगे द्वितीया] कन्या कुमारी एव कन्यका [स्वार्थे कप्रत्ययः] सा एव जनः, तेन दुष्करैः कर्तुमशक्यैः, नियमा व्रतानि च उपासनानि च नियमोपासनानि तैः। ते तव प्रसादम् अनुग्रहम्।

नायकः। को दोषः? निर्दोषदर्शनाः कन्यका भवन्ति। (ग) किन्तु कदाचिदस्मान् दृष्ट्वा बालभावसुलभात् साध्वसान्न चिरमिह तिष्ठेत ; तदनेनैव तमालजालान्तरेण (घ) पश्यावः।

विदूषकः। एव्वं करेम्ह। (१९) [उभौ पश्यतः।]

विदूषकः। [दृष्ट्वा सविस्मयम्] भो वअस्स! पेक्ख पेक्ख। अहह अच्छरिअं! ण केवलं वीणाविण्णाणेण्ण (ङ) सुहं करेदि। जाव इमिणा वीणाविण्णाणाणुरूवेण रूवेण वि (च) अच्छीणं सुहं उप्पादेदि। का उण एसा? किं दाव देई? आहो (छ) णाअकण्णआ? आहो विज्जाहरदारिआ? आहो सिद्धकुलसम्भवेत्ति? (२०)

नायकः। [सस्पृहमवलोकयन्] वयस्य! केयमिति नावगच्छामि। एतत् पुनरहं जानामि।—

---

(१९) एवं कुर्वः।

(२०) भो वयस्य! प्रेक्षस्व प्रेक्षस्व। अहह आश्चर्यम्! न केवलं वीणाविज्ञानेनैव सुखं करोति। यावत् अनेन वीणाविज्ञानानुरूपेण रूपेणापि अक्ष्णोः सुखमुत्पादयति। का पुनरेषा? किं तावत् देवी? आहोस्वित् नागकन्यका? आहोस्वित् विद्याधरदारिका? आहोस्वित् सिद्धकुलसम्भवेति?

(ग) को दोषः? अस्याः दर्शने इति शेषः। निर्दोषं दर्शनं यासां तास्तथाभूताः। कन्यकाः कुमार्यः। "न च पश्येत परस्त्रियम्" इति निषेधेऽपि कन्यकानां परपत्नीत्वाभावात् तासां दर्शने न कश्चिद्दोषः सम्भवेदित्यभिप्रायः।

(घ) अस्मान् अज्ञातकुलशीलान् पुरुषानित्यर्थः, [अविशेषणस्य अस्मदः द्वित्वेऽपि बहुवचनम्] बालभावे बाल्ये, सुलभं स्वाभाविकमित्यर्थः, तस्मात्, साध्वसात् भयात्, ("भीतिर्भीः साध्वसं भयम्" इत्यमरः)। तमालजालान्तरेण तमालतरुश्रेणि-व्यवधानेन।

(ङ) वीणाविज्ञानेन वीणायां विशेषज्ञानेन, सुनैपुण्येनेत्यर्थः।

(च) वीणेति।—वीणाविज्ञानस्य वीणावादनकौशलस्य, अनुरूपेण सदृशेन, रूपेणापि सौन्दर्येणापि।

(छ) "आहो" इति विकल्पे, "स्वित्" इति प्रश्ने।

स्वर्गस्त्री यदि तत् कृतार्थमभवच्चक्षुःसहस्रं हरे-

र्नागी चेन्न रसातलं शशभृता शून्यं मुखेऽस्याः स्थिते।

जातिर्नः सकलान्यजातिजयिनी विद्याधरी चेदियं

स्यात् सिद्धान्वयजा यदि त्रिभुवने सिद्धाः प्रसिद्धास्ततः॥१५॥

विदूषकः। [नायकमवलोक्य सहर्षमात्मगतम्] दिट्ठिआ चिरस्स दाव कालस्स (ज) पड़िदो क्खु एसो गोअरे मम्महस्स। [आत्मानं निर्दिश्य भोजनमभिनीय] अहवा णहि णहि, मम एव्व एक्कस्स बह्मणस्स। (२१) (झ)

---

(२१) दिष्ट्या चिरस्य तावत् कालस्य पतितः खल्वेष गोचरे मन्मथस्य। अथवा नहि नहि, ममैव एकस्य ब्राह्मणस्य।

स्वर्गस्त्रीति।—यदि इयं स्वर्गस्त्री सुरनारी, तत् तदा, हरेः इन्द्रस्य, ("यमानिलेन्द्र-चन्द्रार्कविष्णुसिंहांशुवाजिषु। शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु॥" इत्यमरः) चक्षुषां सहस्रं कृतार्थं सफलम्, अभवत्, परमदृष्टव्यवस्तुदर्शनादिति भावः। चेत् यदि, इयं नागी पन्नगकन्या, तदा अस्याः मुखे स्थिते सति रसातलं पातालं, शशं मृगभेदं बिभर्त्ति धरतीति शशभृत् [शशशब्दपूर्वकात् भृधातोः क्विप्] तेन शशभृता चन्द्रेण, शून्यं न, भवतीति शेषः, एतन्मुखस्यैव चन्द्ररूपत्वादिति भावः। चेत् यदि, इयं विद्याधरी, तदा नः अस्माकं, जातिः विद्याधरजातिरित्यर्थः, सकलाः सर्वाः, अन्याः अपराः, या जातयस्ता जेतुं शीलमस्याः इति [शीलार्थे णिनिप्रत्ययः] सकलान्यजातिजयिनी अपरसर्वजातिपराभवकारिणी, कस्यामपि जातौ ईदृशकन्यारत्नस्यासम्भवादिति भावः। यदि सिद्धानां देवयोनिविशेषाणाम्, अन्वये वंशे जायते इति [सप्तम्यन्तात् जनेर्डप्रत्ययः] तथोक्ता सिद्धान्वयजा सिद्धाख्यदेवयोनिजातिसम्भवा स्यात्, ततस्तदा, त्रिभुवने सिद्धाः तज्जातीया इत्यर्थः, प्रसिद्धाः ख्यातिं गताः, एतत्प्रभावादिति भावः। [अत्र प्रकृते अप्रकृतस्य वस्तुनः संशयात् सन्देहालङ्कारः। उक्तञ्च दर्पणे—"सन्देहः प्रकृतेऽन्यस्य संशयः प्रतिभोत्थितः" इति। स च हरेर्नयनसाफल्यादिफलकथनात् अतिशयोक्त्या संसृष्टः]। शार्दूलविक्रीड़ितं वृत्तम्॥१५॥

(ज) दिष्ट्या भाग्येन। चिरस्य कालस्य [विवक्षायां षष्ठी] चिरेण कालेनेत्यर्थः।

(झ) ममैव एकस्य ब्राह्मणस्य—अयं भावः, अयं मन्मथवशंवदतया मदधीन

चेटी। [ सप्रश्रयम् ] भट्टिदारिए! णं भणामि, किं एदाए णिक्करुणाए पुरदो वाइदेण ? (२२) [ इति वीणामाक्षिपति ] (ञ)

नायिका। [ सरोषम् ] हञ्जे ! मा भअवदिं गोरिं अधिक्खिव। (ट) णं अज्ज किदो मे भअवदीए पसादो। (२३)

चेटी। [ सहर्षम् ] भट्टिदारिए! कहेहि दाव कीरिसो ?(२४)(ठ)

नायिका। हञ्जे ! जाणासि, अज्ज सिविणए एदं एव्व वीणं वादअन्ती भअवदीए गोरिए भणिदम्हि,—"वच्छे मलअवदि ! परितुट्ठम्हि तुह एदिणा वीणाविण्णाणादिसएण, इमाए अ बालजणदुक्कराए (ड) असाहारणाए ममोवरि भत्तिए। ता विज्जाहरचक्कवट्टी अचिरेण ज्जेव पाणिग्गहणं दे णिव्वत्तइस्सदि" त्ति। (२५) (ढ)

(२२) भर्तृदारिके ! ननु भणामि, किमेतस्या निष्करुणायाः पुरतो वादितेन ?

(२३) हञ्जे ! मा भगवतीं गौरीमधिक्षिप। नन्वद्य कृतो मे भगवत्या प्रसादः।

(२४) भर्तृदारिके ! कथय तावत् कीदृशः ?

(२५) हञ्जे ! जानासि, अद्य स्वप्ने एतामेव वीणां वादयन्ती भगवत्या गौर्या भणितास्मि—"वत्से मलयवति ! परितुष्टास्मि तवैतेन वीणाविज्ञानातिशयेन, अनया च बालजनदुष्करया असाधारणया ममोपरि भक्त्या। तत् विद्याधरचक्रवर्ती अचिरेणैव ते पाणिग्रहणं निर्वर्तयिष्यति" इति।

---

एव भविष्यति, मत्प्रयासेनैवास्य मनोरथसिद्धेर्भावित्वात्, ततस्तु पश्चात् यथेच्छं भोजनं लभेयमिति।

(ञ) आक्षिपति आच्छिनत्ति।

(ट) अधिक्षिप तिरस्कुरु।

(ठ) कीदृशः, प्रसाद इति शेषः।

(ड) बालजनेति।—बालजनेन अपरिणतवयस्केन, अतिकोमलाङ्गेनेति भावः, दुष्करा अनुष्ठातुमशक्या तया।

(ढ) विद्याधरचक्रवर्ती विद्याधराणां सम्राट्। पाणिग्रहणं विवाहमित्यर्थः। निर्वर्तयिष्यति सम्पादयिष्यति, करिष्यतीत्यर्थः।

चेटी। [सहर्षम्] भट्टिदारिए! जइ एव्वं, ता कीस सिविणअं इम भणीअदि? णं हिअअट्ठिदो वरो (ण) देईए दिस्सो। (२६)

विदूषकः। [श्रुत्वा] भो वअस्स! अवसरो क्खु एसो अम्हाणं देईदंसणस्स। ता एहि उवसप्पम्ह। (२७) (त)

नायकः। न तावत् प्रविशामि।

विदूषकः। [अनिच्छन्तमपि नायकं बलादाकृष्य उपसृत्य] सोत्थि भोदीए। भोदि! सच्चकं ज्जेव चदुरिआ भणादि, वरो एव्व सो देईए दिस्सो। (२८)

नायिका। [ससाध्वसमुत्तिष्ठन्ती नायकमुद्दिश्य] हञ्जे! को णु क्खु एसो? (२९)

चेटी। [नायकं निरूप्यापवार्य (थ)] इमाए अणस्ससरिसाए आकिदीए एसो सो भअवदीए पसादीकिदो (द) त्ति तक्केमि। (३०)

(२६) भर्तृदारिके! यद्येवं, तत् कस्मात् स्वप्नः अयं भण्यते? ननु हृदयस्थितो वरो देव्या दत्तः।

(२७) भो वयस्य! अवसरः खल्वेषोऽस्माकं देवीदर्शनाय। तदेहि उपसर्पावः।

(२८) स्वस्ति भवत्यै। भवति! सत्यमेव चतुरिका भणति, वर एव स देव्या दत्तः।

(२९) हञ्जे। को नु खल्वेषः?

(३०) अनया अनन्यसदृश्या आकृत्या एष स भगवत्या प्रसादीकृत इति तर्कयामि।

---

(ण) वर इति श्लिष्टपदं, हृदयस्थितः अभीष्टः, विषयः, पाणिग्रहीता च।

(त) देवीत्यपि श्लिष्टपदम्; गौरी मलयवती च। मलयवत्या असामान्यसौन्दर्येण देवीसदृशत्वात्, राजचक्रवर्त्तिनः पत्नीरूपेणाभिषिक्तस्य भविष्यत्त्वाच्च, "देवी कृताभिषेकायाम्" इत्यमरोक्तेः। अस्मिन् नाटके मलयवती जीमूतवाहनयोः सम्भोगवर्णनमेव प्रधानं फलम्; अत्र च वर इति पदस्य देवीति पदस्य च द्व्यर्थत्वेन सुश्लिष्टत्वात् पूर्व्वोक्तप्रधानफलापेक्षित्वाच्च इदं चतुर्थं पताकास्थानम्; तल्लक्षणं यथा दर्पणे,— "द्व्यर्थो वचनविन्यासः सुश्लिष्टः काव्ययोजितः। प्रधानार्थान्तराक्षेपी पताकास्थानकं परम्॥" इति। उपसर्पावः समीपं गच्छाव इत्यर्थः।

(थ) निरूप्य वीक्ष्य। अपवार्य पराङ्मुखीभूयेत्यर्थः।

(द) सः विद्याधरचक्रवर्त्तीत्यर्थः। प्रसादीकृतः अनुग्रहरूपेण प्रदत्त इत्यर्थः।

नायिका [ सस्पृहं सलज्जञ्च नायकमवलोकयति ]।

नायकः। तनुरियं तरलायतलोचने!
श्वसितकम्पितपीनघनस्तनि!।
श्रममलं तपसैव गता पुनः
किमिति सम्भ्रमकारिणि! खिद्यते?॥ १६॥

नायिका। [ अपवार्य ] हञ्जे अदिसद्धसेण ण सक्कुणोमि एदस्स अहिमुही ठादुं (३१)। [ नायकं तिर्य्यक् सलज्जञ्च पश्यन्ती किञ्चित पराङ्मुखी (ध) तिष्ठति ]।

चेटी। भट्टिदारिए! किं एदम्? (३२)

नायिका। हञ्जे! ण सक्कुणोमि एदस्स आसण्णे (न) चिट्ठिदुं। ता एहि अण्णदो गच्छम्ह (३३)। [ गन्तुमिच्छति ]।

(३१) हञ्जे! अतिसाध्वसेन न शक्नोमि एतस्याभिमुखी स्थातुम्।
(३२) भर्त्तृदारिके! किमेतत्?
(३३) हञ्जे! न शक्नोमि एतस्यासन्ने स्थातुम्। तदेह्यन्यतो गच्छावः।

तनुरिति।—तरले चञ्चले, आयते दीर्घे च, लोचने यस्याः तत्सम्बुद्धौ, [त्रिपदबहुव्रीहिरेवमुत्तरत्रापि बोध्यम्]। श्वसितेन निःश्वासेन, कम्पितौ पीनौ स्थूलौ, घनौ निबिडौ, स्तनौ यस्याः तत्सम्बोधने; सम्भ्रमकारिणि! मद्दर्शनात् सम्भ्रान्ते इत्यर्थः, इयं तनुः शरीरं, तपसैव अलम् अत्यर्थं, श्रमं गता, किमिति कथं, पुनः खिद्यते? भवती इति शेषः। मदीयाभ्यर्थनार्थमुत्थानादिति भावः। अत्र सम्भ्रमकरणस्य खेदं प्रति हेतुतया काव्यलिङ्गालङ्कारः। द्रुतविलम्बितं वृत्तम्।—"द्रुतविलम्बितमाह नभौ भरौ" इति तल्लक्षणात्॥ १६॥

(ध) तिर्य्यक् वक्रभावेन। किञ्चित् ईषत्, पराङ्मुखी, विमुखी, पराङ्गता-ननेति यावत्।

(न) आसन्ने समीपवर्त्तिनि स्थाने इत्यर्थः।

विदूषकः। भो! भाअदि क्खु एसा! मम पठिअविज्जं विअ मुहुत्तअं धारेमि। (२४) (प)

नायकः। को दोषः?

विदूषकः। भोदि! किं एत्थ तुम्हाणं तवोवणे ईदिसो आआरो,—जेण अदिही आअदो वाआमेत्तएण वि ण संभावीअदि? (२५) (फ)

चेटी। [नायिकां दृष्ट्वा आत्मगतम्] अणुरज्जदि विअ एत्थ एदाए (ब) दिट्ठी। भोदु एव्वं दाव भणिस्सं। [प्रकाशम्] भट्टिदारिए! जुत्तं भणादि बह्मणो, उइदो क्खु दे अदिहिजणसक्कारो। ता किं ईदिसे महाणुभावे पडिवत्तिमूढा चिट्ठसि? अहवा चिट्ठ तुमं, अहं एव्व जधाणुरूवं (भ) करइस्सं।

(२४) भोः! बिभेति खल्वेषा! मम पठितविद्यामिव मुहूर्तं धारयामि।

(२५) भवति! किमत्र युष्माकं तपोवने ईदृश आचारः,—येनातिथि-रागतो वाङ्मात्रेणापि न सम्भाव्यते?

(२६) अनुरज्यते इवात्रैतस्या दृष्टिः। भवतु एवं तावत् भणिष्यामि। भर्तृ-दारिके! युक्तं भणति ब्राह्मणः, उचितः खलु ते अतिथिजनसत्कारः। तत् किमीदृशे महानुभावे प्रतिपत्तिमूढा तिष्ठसि? अथवा तिष्ठ त्वम्, अहमेव यथाऽनुरूपं

(प) पठितेति।—पठिताम् अभ्यस्तां विद्यामिव, मुहूर्तम् अल्पसमयमित्यर्थः, धारयामि अस्या गमनं प्रतिरुणध्मीत्यर्थः। अपठितविद्यायाः अल्पमात्रेणैव विस्मरणात् इयमुपमा।

(फ) वाङ्मात्रेणापि केवलया वाचाऽपि, [वाच्शब्दात् मात्रट्प्रत्ययः] न सम्भाव्यते न सत्क्रियते। सर्वद्रव्याभावेऽपि केवलया सूनृतया वाचाऽपि अतिथिसत्कारस्य गृहस्थानामवश्यकर्त्तव्यत्वात्; तथा चोक्तं—"तृणानि भूमिरुदकं वाक् चतुर्थी च सूनृता। एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन॥" इति।

(ब) अनुरज्यते इव अनुरक्ता भवतीति सम्भावयामीत्यर्थः। अत्र अस्मिन् नायके। एतस्याः मलयवत्याः।

(भ) महानुभावे महाशये जने। प्रतिपत्तिमूढा इतिकर्त्तव्यज्ञानशून्या। यथाऽनु-रूपम् [अनुरूपम् उचितम् अनतिक्रम्य इत्यव्ययीभावः] यथोचितम्।

[नायकं निर्दिश्य] साअदं अज्जस्स! आसणपड़िग्गहेण (म) अलंकरेदु अज्जो इमं पदेसं। (३६)

विदूषकः। भो वअस्स! सोहणं एसा भणादि। उवविसिअ एत्थ मुहुत्तअं वीसमम्ह। (३७)

नायकः। युक्तमाह भवान्। [उभावुपविशतः]।

नायिका। [चेटीमुद्दिश्य] अइ परिहाससीले! मा एव्वं करेहि। कदावि कोवि तावसो पेक्खदि, तदो मं अविणोदेत्ति (य) संभावइस्सदि। (३८)

[ततः प्रविशति तापसः]।

तापसः। आज्ञापितोऽस्मि कुलपतिना कौशिकेन, (र) यथा—"वत्स शाण्डिल्य! पितुराज्ञया सिद्धयुवराजमित्रावसुः भविष्यद्विद्याधरचक्रवर्त्तिनं कुमारजीमूतवाहनम् इहैव मलये पर्वते क्वापि वर्त्तमानं भगिन्या मलयवत्या वरहेतोर्द्रष्टुमद्य गतः। तस्य प्रतीक्षमाणाया मलयवत्याः कदाचित् मध्यन्दिन-

करिष्यामि। स्वागतमार्य्यस्य! आसनपरिग्रहेण अलङ्करोत्वार्य्य इमं प्रदेशम्।

(३७) भो वयस्य! शोभनमेषा भणति। उपविश्यात्र मुहूर्त्तं विश्राम्यावः।

(३८) अयि परिहासशीले! मैवं कुरु। कदाऽपि कोऽपि तापसः प्रेक्षते, ततो मामविनीतेति सम्भावयिष्यति।

(म) आसनपरिग्रहेण आसनस्वीकारेण, आसनोपवेशनेनेत्यर्थः।

(य) अविनीता धर्षिता, उद्धतस्वभावेत्यर्थः।

(र) कुलपतिः दशसहस्रमुनीनाम् अन्नदानेन वेदाध्यापयिता महामुनिः,— "मुनीनां दशसाहस्रं योऽन्नदानादिपोषणात्। अध्यापयति विप्रर्षिः स वै कुलपतिः स्मृतः॥" इति, तेन। कौशिकेन कुशिकनन्दनेन विश्वामित्रेणेत्यर्थः।

(ल) तं मित्रावसुम्। मध्यन्दिनेति।—मध्यन्दिने मध्याह्ने,

सवनवेलावधिरतिक्रामेत्, तदेनामाहूयागच्छ" इति। तत् तपोवनगौरोगृहमेव गच्छामि। [ परिक्रम्य भूमिं निरूप्य सविस्मयम् ]। अये! कस्य पुनरियं पांशुले भूप्रदेशे प्रकाशचक्रचिह्ना पदपङ्क्तिः!! ( क ) [ अपतो जीमूतवाहनं निर्दिश्य ]। नूनमस्यैवेयं महापुरुषस्य। तथा हि—

> उष्णीषः स्फुट एष मूर्द्धनि विभात्यूर्णेयमन्तर्भ्रुवो-
> श्चक्षुस्तामरसानुकारि हरिणा वक्षःस्थलं स्पर्द्धते।
> चक्राङ्कञ्च यथा पदद्वयमिदं मन्ये तथा कोऽप्ययं
> नो विद्याधरचक्रवर्त्तिपदवीमप्राप्य विश्राम्यति॥ १७॥

अथवा कृतं सन्देहेन, व्यक्तमेतेनैव जीमूतवाहनेन भवितव्यम्। [ मलयवतीं निरूप्य ] अये! इयमपि राजपुत्री!!

---

यत् सवनं स्नानं, तस्य वेलावधिः समयनियमः। अतिक्रामेत् अतीयात्। पांशवः धूलयः अस्यां सन्तीति पांशुलः, [ पांशुशब्दात् लच्-प्रत्ययः। "रेणुर्द्वयोः स्त्रियां धूलिः पांशुर्ना न द्वयो रजः" इत्यमरः ] तस्मिन् पांशुले धूलिमयी। प्रकाशं स्फुटं, चक्रस्य चक्रवर्त्तिलक्षणस्य, चिह्नं यस्यां तादृशी। पदपङ्क्तिः पदविन्यासरेखावलिः।

महापुरुषत्वं वर्णयति, उष्णीष इति।—मूर्द्धनि एषः स्फुटः समुज्ज्वलः, उष्णीषः शिरोवेष्टनभूतः राजमुकुटविशेष इत्यर्थः, विभाति विराजते, भ्रुवोः अन्तः मध्ये, इयम् ऊर्णा भ्रूमध्यवर्त्तिमहापुरुषलक्षणाऽऽवर्त्ताकाररोमराजिरित्यर्थः, ( "ऊर्णा मेषादिलोम्नि भ्रूमध्ये आवर्त्ते चान्तरा भ्रुवोः" इत्यमरः ) चक्षुः तामरसं कमलं, ( "पङ्केरुहं तामरसम्" इत्यमरः। ) तत् अनुकरोति इति तामरसानुकारि कमलसदृशं, वक्षःस्थलं हरिणा मृगेन्द्रेण, स्पर्द्धते मृगेन्द्रवत् विशालमिति भावः; इदञ्च पदद्वयं यथा चक्राङ्कं चक्रचिह्नितं, तथा मन्ये सम्भावयामि, कोऽपि अयं पुरुषः विद्याधरचक्रवर्त्तिपदवीं विद्याधराधीश्वरत्वम्, अप्राप्य नो विश्राम्यति न विरमतीत्यर्थः, अवश्यमेवायं विद्याधरचक्रवर्त्ती भविष्यतीति भावः। [ उपमाऽलङ्कारः ] शार्दूलविक्रीडितं वृत्तम्॥ १७॥

[उभौ विलोक्य] चिरात् खलु युक्तकारी विधिः स्यात्, यदि युगलकमेतदन्योऽन्यानुरूपं घटयेत्। (व) [उपसृत्य नायकं निर्दिश्य] स्वस्ति भवते।

नायकः। भगवन्! जीमूतवाहनोऽभिवादयते।

[उत्थातुमिच्छति]

तापसः। अलमलम् अभ्युत्थानेन। ननु सर्वस्याभ्यागतो गुरुः इति भवानेवास्माकं पूज्यः; तत् यथासुखं स्थीयताम्। (श)

नायिका। अज्ज! पणमामि। (२९)

तापसः। [नायिकां निर्दिश्य] वत्से! अनुरूपभर्तृगामिनी (ष) भूयाः। राजपुत्रि! त्वामाह कुलपतिः कौशिकः, यथा—"अतिक्रामति मध्यन्दिनसवनवेला, तत् त्वरितमागम्यताम्" इति।

मलयवती। जं गुरू आणवेदि। [आत्मगतम्] एक्कतो गुरुवअणं, अण्णतो दइअदंसणसुहं त्ति गमणागमणाधिरूढं अज्ज वि

(२९) आर्य्य! प्रणमामि।

(व) युक्तकारी समीचीनकार्य्यकारी, योग्ययोजनकारीति भावः। युगलकं मिथुनम्। अन्योऽन्यानुरूपं परस्परयोग्यम्। घटयेत सङ्गमयेत्।

(श) अभ्युत्थानेन उत्थाय अभ्यर्थनादिकरणम् अभ्युत्थानं तेन। अस्माकं पूज्यः अस्माभिः पूज्यः इत्यर्थः, [कृत्यप्रत्यययोगे कर्त्तरि षष्ठी]। सुखमनतिक्रम्य इति यथासुखम्, [अनतिक्रमार्थे अव्ययीभावः] तत यथा तथा, स्थीयतां, भवतेति शेषः।

(ष) अनुरूपेति।—अनुरूपं योग्यं, भर्त्तारं स्वामिनं, गच्छतीति अनुरूपभर्तृगामिनी सदृशस्वामिसङ्गता।

मं दोलअदि हिअअं। (४०) (स) [ उत्थाय निश्वस्य सलज्जं सानुरागञ्च नायकं पश्यन्ती तापससहिता निष्क्रान्ता ]।

नायकः। [ सोत्कण्ठं निश्वस्य नायिकां पश्यन् ]।—

अनया जघनाभोग-भरमन्थरयातया।
अन्यतोऽपि व्रजन्त्या मे हृदये निहितं पदम् ॥१८॥

विदूषकः। भो! दिट्ठं तुए पेक्खिदव्वं; ता दाणिं मज्झण्णसूरकिरणसंतावदिउणिदो विअ मे उदरग्गी धमधमाअदि; (ह) ता एहि णिक्कमम्ह, जेण बम्हणो अदिही भविअ मुणिजणसआसादो लद्धेहिं कंदमूलफलेहिं वि दाव पाणधारणं करेमि। (४१)

---

(४०) यत् गुरुराज्ञापयति। एकतो गुरुवचनम्, अन्यतो दयितदर्शनसुखमिति गमनागमनाविरुद्धमद्यापि मां दोलयति हृदयम्।

(४१) भोः! दृष्टं त्वया प्रेक्षितव्यम्; तदिदानीं मध्याह्नसूर्यकिरणसन्तापद्विगुणित इव मे उदराग्निर्धमधमायते; तदेहि निष्क्रामावः, येन ब्राह्मणोऽतिथिर्भूत्वा मुनिजनसकाशात् लब्धैः कन्दमूलफलैरपि तावत् प्राणधारणं करोमि।

---

(स) एकतः एकस्मिन् पक्षे, गुरुवचनं गुरोः कौशिकस्य वचनम्, इतो गमनादेशरूपम् अनुल्लङ्घनीयं वाक्यमित्यर्थः, अन्यतः अन्यस्मिन् पक्षे, दयितस्य प्रियस्य, दर्शनसुखम्। गमनागमनाविरुद्धं—गमनम् आगमनञ्च अविरुद्धं गन्तुकाममगन्तुकामञ्चेत्यर्थः। मां दोलयति आकुलयतीत्यर्थः। हृदयं [ कर्तृ ]।

अनयेति।—जघनस्य आभोगभरेण विस्तारातिरेकेण, मन्थरं मन्दं, यातं गमनं यस्यास्तथाभूतया, अन्यतः अन्यत्र, व्रजन्त्या गच्छन्त्या अपि, अनया कान्तया, मे मम, हृदये पदं चरणः स्थानञ्च, निहितं दत्तं कृतञ्चेत्यर्थः; अस्याः पीनजघनायाः मन्थरगामिन्याः च दर्शनेन नितरां मुग्धस्य मे हृदयम् एतत्पराधीनं जातमिति भावः। [ अत्र छेकानुप्रासो नाम शब्दालङ्कारः, तथा पदं चरणः, हृदये तत्पाताभावात् विरोधः, पदं स्थानम् इत्यर्थे विरोधाभावात् विरोधाभासालङ्कारश्च ] ॥ १८ ॥

(ह) प्रेक्षितव्यं द्रष्टव्यम्। मध्याह्नेति।—मध्याह्नसूर्यस्य किरणैः सन्ता-

नायकः। [ऊर्द्ध्वमवलोक्य] मध्यमध्यास्ते नभस्तलस्य भगवान् सहस्रदीधितिः। (क) तथा हि—

तापात् तत्क्षणघृष्टचन्दनरसौ पाण्डू कपोलौ वहन्
संसक्तैर्निजकर्णतालपवनैः संवीज्यमाननः।
सम्प्रत्येष विशेषसिक्तहृदयो हस्तोज्झितैः शीकरैः
ग्लायच्छल्लकदुःसहामिव दशां धत्ते गजानां पतिः॥ १९॥

[निष्क्रान्ताः सर्वे।]

इति प्रथमोऽङ्कः।

---

पात् हिङ्गुलित इव हैङ्गुल्यं प्राप्त इव, आतपाङ्कित इवेत्यर्थः। धगधगायते ज्वलतीत्यर्थः।

(क) मध्यं मध्यभागम्, अध्यास्ते, मध्याह्नः सञ्जातः इत्यर्थः, [अधिपूर्वकस्य आस्-धातोः प्रयोगे अधिकरणस्य कर्मत्वम्]। भगवान् षडैश्वर्य्यशाली, सहस्रं दीधितयः किरणाः यस्य सः सहस्रदीधितिः सूर्य्यः।

मध्याह्नं वर्णयति, तापादिति।—एषः गजानां पतिः गजराजः, तापात् हेतोः तत्क्षणं घृष्टः मर्दितः, चन्दनस्य चन्दनतरोः, रसः निर्य्यासः याभ्यां तादृशौ, शैत्यलाभार्थमिति भावः; अत एव पाण्डू शुभ्रौ, कपोलौ गण्डौ, वहन्, संसक्तैः सन्ततैः, निरन्तरैरित्यर्थः, निजौ कर्णौ एव तालौ तालवृन्ते इत्यर्थः, तत्कृतैः पवनैः वायुभिः, संवीज्यमानम् आननं येन तथाभूतः; तथा हस्तेन शुण्डादण्डेन, उज्झितैः उत्क्षिप्तैः, शीकरैः जलकणैः, विशेषेण सिक्तं हृदयं वक्षःस्थलं येन तादृशः सन्, सम्प्रति ग्लायतां ग्लानिं गच्छतां, शल्लकानां गजभक्ष्यतरुविशेषाणां, दुःसहामिव सोढुमशक्यामिव, दशां धत्ते प्राप्नोति। शल्लका यथा गजैर्भक्ष्यमाणा नितरां दुर्दशां गच्छन्ति, गजा अपि ग्रीष्मोत्तापेन तथेति भावः। [उपमासंसृष्टा स्वभावोक्तिरलङ्कारः। किञ्च तापात् अर्थात् मदनसन्तापात् ममापि ईदृश्येव दशा भविष्यति इति व्यङ्ग्यार्थः सूच्यते]। शार्दूलविक्रीडितं वृत्तम्॥ १९॥

# अथ द्वितीयोऽङ्कः।

[ ततः प्रविशति चेटी ]।

चेटी। आणत्तम्हि भट्टिदारिआए मलअवदीए, जहा—"हंजे! मणोहरिए! अज्ज चिराअदि (क) मे भाअरो अज्जो मित्ता-वसू; ता गदुअ जाणेहि किं आअदो ण वा ?" त्ति [ परिक्रामति। नेपथ्याभिमुखं दृष्ट्वा ]। का उण एसा तुरिदतुरिदं इदो ज्जेव्व आअच्छदि ? [ निरूप्य ] कहं चदुरिआ !! ( १ )

[ततः प्रविशति द्वितीया चेटी ]।

प्रथमा। [ उपसृत्य ] हला चदुरिए! किं-णिमित्तं उण मं परिहरिअ एव्वं तुरिदाए गच्छीअदि ? ( २ )

द्वितीया। हला मणोहरिए! आणत्तम्हि भट्टिदारिआए मलअवदीए—"हंजे चदुरिए! कुसुमावचअपरिस्समणीसहं (ख) मे सरीरं। सरदादवजणिदो विअ मं संदावो अधिअदरं

---

( १ ) आज्ञप्तास्मि भर्तृदारिकया मलयवत्या, यथा—"हञ्जे मनोहरिके! अद्य चिरयति मे भ्राता आर्य्यः मित्रावसुः; तत् गत्वा जानीहि किमागतो न वा ?" इति। का पुनरेषा त्वरितत्वरितमित एवागच्छति? कथं चतुरिका !!

( २ ) हला चतुरिके! किं-निमित्तं पुनर्मां परिहृत्य एवं त्वरितया गम्यते ?

( ३ ) हला मनोहरिके! आज्ञप्तास्मि भर्तृदारिकया मलयवत्या—"हञ्जे चतुरिके! कुसुमावचयपरिश्रमनिःसहं मे शरीरम्। शरदातपजनित इव मां

---

( क ) चिरयति [ चिरं करोतीत्यर्थे णिच् ] विलम्बं करोति।

( ख ) कुसुमेति।—कुसुमानाम् अवचये चयने, यः परिश्रमः तेन निःसहम् अक्षमं, क्लान्तमित्यर्थः।

बाधेदि। ता गच्छ तुमं, बालकदलीवत्तपरिक्खित्ते चंदणलदाघरए चंदमणिसिलाअलं (ग) सज्जीकरेहि" त्ति। अणुचिट्ठिदं अ मए जधा आणत्तं। जाव गदुअ भट्टदारिआए णिवेदेमि। (३)

प्रथमा। जइ एव्वं, ता लहुं गदुअ णिवेदेहि, जेण से तहिं गदाए उवसमदि संदावो। (४)

द्वितीया। [विहस्यात्मगतम्] ण ईदिसो से संदावो जो एव्वं उवसमिस्सदि। विचित्तरमणीअं चंदणलदाघरअं पेक्खंतीए अधिअदरो संदावो हुविस्सदि त्ति तक्केमि। [प्रकाशम्] ता गच्छ तुमं, अहंवि "सज्जीकिदं मणिसिलाअलं" त्ति गदुअ भट्टदारिआए णिवेदेमि। (५)

[ इति निष्क्रान्ते। प्रवेशकः ]। (घ)

सन्तापोऽधिकतरं बाधते। तत् गच्छ त्वं बालकदलीपत्रपरिक्षिप्ते चन्दनलतागृहे चन्द्रमणिशिलातलं सज्जीकुरु" इति। अनुष्ठितञ्च मया यथाऽऽज्ञप्तम्। यावत् गत्वा भर्तृदारिकायै निवेदयामि।

(४) यद्येवं, तल्लघु गत्वा निवेदय, येनास्यास्तत्र गताया उपशाम्यति सन्तापः।

(५) नेदृशोऽस्याः सन्तापः य एवमुपशमिष्यति। विचित्ररमणीयं चन्दनलतागृहं प्रेक्षमाणाया अधिकतरः सन्तापो भविष्यतीति तर्कयामि। तद्गच्छ त्वम्, अहमपि "सज्जीकृतं मणिशिलातलम्" इति गत्वा भर्तृदारिकायै निवेदयामि।

---

(ग) शरदिति।—शरदः शरत्कालस्य, आतपेन रौद्रेण, जनितः उत्पादितः इव; वस्तुतोऽयं सन्तापः न शरज्जनितः, परं तु विरहादेव; तथा च, शरदातपजनितः सन्तापो यथा बाधते तथा विरहजनितः सन्तापो मां बाधते इति सूचनार्थम् इवेति पदं प्रयुक्तम्। बालकदलीति।—बालैः नवैः, मसृणकोमलैः सरसैरित्यर्थः, कदलीपत्रैः परिक्षिप्ते आवृते। चन्द्रमणिशिलातलं चन्द्रकान्तपाषाणतलमित्यर्थः।

(घ) अत्र प्राकृतभाषया नीचपात्रप्रयुक्तत्वात् द्वयोर्नायकनायिका-दर्शनरूपाणां वर्तिष्यमाणानां द्वयोः नैकरूपाणां कथांशानां सूचनारूपविष्कम्भक-

[ततः प्रविशति सोत्कण्ठा (ङ) मलयवती चेटी च]। (च)

मलयवती। [निःश्वस्यात्मगतम्] हिअअ! तधा णाम तस्सिं जणे जं लज्जाए मंथरं मुहं कादुअ दाणिं तहिं अत्तणा गदंसि त्ति अहो! दे अत्तंभरित्तणं। (छ) [प्रकाशम्]। हंजे चदुरिए! आदेसेहि मे भअवदीए आअदणं। (६)

---

(६) हृदय! तथा नाम तस्मिन् जने यत् लज्जया मन्थरं मुखं कृत्वेदानीं तत्रात्मना गतमसीति अहो! ते आत्मम्भरित्वम्। हञ्जे चतुरिके! आदिश मे भगवत्या आयतनम्।

सूचकत्वात् प्रवेशकनाम नाटकाङ्गम्। तल्लक्षणं यथा दर्पणे—"प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः। अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथा॥" इति।

(ङ) उत्कण्ठा हि अभिलषितवस्तुनः अप्राप्तौ चित्तचाञ्चल्यादिकारकः गात्रशोषणादिकारकश्चावस्थाविशेषः। तल्लक्षणं यथा—"रागे त्वलब्धविषये वेदना महती तु या। संशोषणी तु गात्राणां तामुत्कण्ठां विदुर्बुधाः॥" इत्यभिधाने।

(च) परस्परानुरागवतोः नायिकानायकयोः मेलनात् पूर्वं यो दशाविशेषः स पूर्वरागः। तदुक्तं—"श्रवणात् दर्शनाद्वाऽपि मिथः संरूढरागयोः। दशाविशेषो योऽप्राप्तौ पूर्वरागः स उच्यते॥" इति। तत्रापि आदौ पुरुषरागे सम्भवत्यपि नायिकारागवर्णनाया अधिकतररमणीयत्वात् "आदौ वाच्यः स्त्रिया रागः पुंसः पश्चात्तदिङ्गितैः" इत्युक्तेः प्रथमं तमेव वर्णयति मलयवती-तत्सख्योः कथोपकथनच्छलेन। पूर्वरागे हि दश दशाः सम्भवन्ति, तदुक्तं—"चक्षूरागस्तदनु मनसः सङ्गतिर्भावना च। व्यावृत्तिः स्यात् तदनु विषयग्रामतश्चेतसोऽपि॥ निद्राच्छेदस्तदनु तनुता निस्त्रपत्वं च पश्चात्। चोन्मादो मूर्च्छा तदनु मरणं स्युर्दशास्तु क्रमेण॥" इति।

(छ) तथा तेन प्रकारेण, नाम इति कुत्सार्थकमव्ययम्; गतमसि इति यत् तत् निन्दनीयमित्यर्थः। ("नाम…। सम्भाव्यकुत्साप्राकाश्यविकल्पेऽपि च दृश्यते॥" इति मेदिनी) तस्मिन् जने नायके जीमूतवाहने, तत्समीपे इत्यर्थः, लज्जया मन्थरं जड़ं, वाक्शून्यमित्यर्थः, इदानीं तत्र तस्मिन् जने, आत्मना स्वयं, गतमसि इति यत्; अहो आश्चर्यं, [आत्मानं बिभर्तीति आत्मम्भरिः, तस्य भावस्तत्त्वम्] आत्मम्भरित्वं स्वार्थपरत्वमित्यर्थः। यथा लज्जया तत्र गमनस्य सम्भावनामपि त्वया प्राक् न कृतम्, अधुना तां लज्जां परित्यज्य तदधीनमेव जातमसि!

चेटी। [आत्मगतम्] चंदणलदाघरअं पत्थिदा भणादि भअवदीए आअदणं। [प्रकाशम्]। चंदणलदाघरअं भट्टिदारिआ पत्थिदा (७)। (ज)

नायिका। [सलज्जम्] हंजे! सुट्ठु सुमराविदं। (झ) ता एहि, तहिं ज्जेव्व गच्छम्ह। (८)

चेटी। एदु एदु भट्टिदारिआ। (९)

नायिका। [परिक्रम्य गच्छति]।

चेटी। [पृष्ठतो दृष्ट्वा सोद्वेगमात्मगतम्]। अहो! से सुसंहिदअअत्तणं! कहं तं ज्जेव्व देवीभवणं पत्थिदा!! [प्रकाशम्]। भट्टिदारिए! णं इदो चंदणलदाघरअं, ता इदो इदो एहि। (१०)

नायिका। [सविलक्षस्मितं (ञ) तथा करोति]।

(७) चन्दनलतागृहं प्रस्थिता भणति भगवत्या आयतनम्। चन्दनलतागृहं भर्तृदारिका प्रस्थिता।

(८) हञ्जे! सुष्ठु स्मारितम्। तदेहि, तत्रैव गच्छावः।

(९) एतु एतु भर्तृदारिका।

(१०) अहो! अस्याः शून्यहृदयत्वम्! कथं तदेव देवीभवनं प्रस्थिता!! भर्तृदारिके! ननु इतश्चन्दनलतागृहम्। तदित इत एहि।

इति मरलार्थः। स्वार्थपराः खलु प्रयोजनसिद्धिसमये लज्जासङ्कोचादिकं किमपि न गणयन्तीति भावः।

(ज) प्रस्थिता प्रस्थातुं प्रवृत्तेत्यर्थः।

(झ) प्रथमाङ्के नयनप्रीतिरूपां दशामुक्त्वा इदानीं मनःसंयोगरूपां द्वितीयां दशां लक्षयति।

(ञ) विलक्षस्य विस्मितस्य, स्मितम् ईषद्धास्यं, तेन सह वर्त्तमानं यथा तथा विस्मितजन इव ईषद्धास्यं कृत्वेत्यर्थः। ("विलक्षो विस्मयान्विते" इत्यमरः।) यथा कश्चित् विस्मितो जनः स्वीयहृद्गतं भावं गोपायितुं स्मितं करोति, तथा मलयवत्यपि "अयं दासी अपि मे मनोविकारं विदिता" इति विस्मिता पश्चात् तद्भावं गोपायितुं स्मितमकरोत् इति फलितार्थः।

चेटी। इदं चंदणलदाघरअं, ता पविसिअ चंदमणिसिलाअले उवविसिअ समस्ससदु भट्टिदारिआ। ( ११ )

[ उभे उपविशतः ]।

नायिका। [ निश्वस्य आत्मगतम् ] भअवं कुसुमाउह! जेण तुमं रूअसोहाए णिज्जिदोसि, तस्स तुए ण किंपि किदं; मम उण अणवराहाए वि अवलेत्ति करिअ पहरंतो ण लज्जेसि? (ट) [ आत्मानं निर्वर्ण्य मदनावस्थां नाटयन्ती प्रकाशम् ] हंजे! कीस उण घणपल्लवणिरुद्धसूरकिरणं (ठ) तं एव्व चंदणलदाघरअं ण मे अज्जवि संदावदुक्खं अवणेदि? ( १२ )

---

( ११ ) इदं चन्दनलतागृहम्; तत् प्रविश्य चन्द्रमणिशिलातले उपविश्य समाश्वसितु भर्तृदारिका।

( १२ ) भगवन् कुसुमायुध! येन त्वं रूपशोभया निर्जितोऽसि, तस्य त्वया न किमपि कृतम्; मम पुनरनपराद्धाया अपि अबलेति कृत्वा प्रहरन् न लज्जसे? हञ्जे! किं पुनर्घनपल्लवनिरुद्धसूर्यकिरणं तदेव चन्दनलतागृहं न मे अद्यापि सन्तापदुःखमपनयति?

( ट ) कुसुमेत्यादि।—कुसुमानि एव आयुधानि अस्त्राणि यस्य सः, ( "कुसुमेषुरनन्यजः" इति कामपर्य्याये अमरः ) पञ्चबाणत्वात् पञ्च कुसुमान्येव तदस्त्राणि; तानि तु—"अरविन्दमशोकञ्च चूतञ्च नवमल्लिका। नीलोत्पलञ्च पञ्चैते पञ्चबाणस्य सायकाः॥" इति, तत्सम्बुद्धौ। येन जीमूतवाहनेन रूपशोभया आकारसौन्दर्य्येण, निर्जितोऽसि, तस्य जीमूतवाहनस्य त्वया किमपि न कृतम्; तस्य सबलत्वात् तव च कुसुमायुधत्वेन अतीव दुर्बलत्वात् इति भावः। [एतेन मदनादपि जीमूतवाहनस्य अधिकरूपवत्त्वम् अधिकवीर्य्यवत्त्वञ्च ध्वन्यते। ] पुनः किन्तु अनपराद्धायाः निर्दोषाया अपि, मम [ सम्बन्धविवक्षायां षष्ठी ] अनपराद्धामपि मामित्यर्थः, अबला बलशून्या रमणी च, [ इति-योगे प्रथमा ] इति कृत्वा इति हेतोः, प्रहरन् प्रहारं कुर्वन्नपि, न लज्जसे? त्वादृशस्य महावीरस्य निरपराधेऽपि दुर्बले रमणीजने एव पराक्रमावसरः, न सबले कृतापराधेऽपि सत्यपीति भावः।

( ठ ) घनपल्लवेति।—घनैः निविडैः, पल्लवैः निरुद्धा निवारिताः, सूर्य्यस्य किरणा यस्मात् तत् तथोक्तम्।

चेटी। जाणामि अहं एत्थ संदावस्स कारणं; किं उण असंभाविणो भट्टिदारिआ ण तं पडिवज्जिस्सदि त्ति। (१३) (ड)

नायिका। [आत्मगतम] संक्खिदा विअ अहं एदाए, तहवि पुच्छिस्सं। [प्रकाशम] हंजे ! किं तं, जं ण पडिवज्जिअदि ? ता कहेहि दाव किं तं कारणं। (१४)

चेटी। एसो दे हिअअट्ठिदो वरो। (१५)

नायिका। [सहर्षं ससम्भ्रममुत्थाय द्वित्राणि पदानि (ढ) गत्वा] कहिं कहिं सो ? (१६)

चेटी। [उत्थाय सस्मितम] भट्टिदारिए ! सो को ? (१७)

नायिका [सलज्जमुपविश्य अधोमुखी तिष्ठति]।

चेटी। भट्टिदारिए ! एदम्हि वत्तुकामा—एसो दे हिअअट्ठिदो वरो एव्व देईए दिस्सा सिविणके। पच्छवि

---

(१३) जानाम्यहमत्र सन्तापस्य कारणम्; किं पुनरसम्भाविनो भर्तृदारिका न तत् प्रतिपत्स्यते इति।

(१४) लक्षितेवाहमेतया, तथाऽपि पृच्छामि। हञ्जे ! किं तत्, यत्र प्रतिपद्यते ? तत् कथय तावत्, किं तत् कारणम्।

(१५) एष ते हृदयस्थितो वरः।

(१६) कुत्र कुत्र सः ?

(१७) भर्तृदारिके ! स कः ?

(१८) भर्तृदारिके ! एतदस्मि वक्तुकामा—एष ते हृदयस्थितो वर एव देव्या

---

(ड) सन्तापस्य कारणं जीमूतवाहन इति भावः। किं पुनः किन्तु, असम्भाविनो जीमूतवाहनो मे भर्त्ता भवितेति असम्भवं मन्यमानेत्यर्थः। तत् मदभिप्रेतम्। प्रतिपत्स्यते स्वीकरिष्यति।

(ढ) द्वित्राणि द्वे त्रीणि वेत्यर्थः; [द्वे वा त्रीणि वा इति बहुव्रीहौ समासान्त-ड-प्रत्ययः]।

क्खणं ज्जेव्व पविमुक्ककुसुमबाणो विअ (थ) मअरद्धओ भट्टिदारिआए दिट्ठो। सो दे इमस्स संदावस्स कारणं, जेण एदं सहावसीदलं वि चंदणलदाघरअं ण दे संदावदुक्खं अवणेदि (१८)।

नायिका। चदुरिआए लक्खिदम्हि। सच्चं हंजे! चदुरिआ क्खु तुमं। किं दे अवरं पच्छाईअदि, ता कहिस्सं (१९)।

चेटी। भट्टिदारिए! दाणिं ज्जेव्व कहिदं; किं बहुणा पलविदेण, अलं संभमेण। (त) मा संतप्प। जइ अहं चदुरिआ, तदा सोवि भट्टिदारिअं अवेक्खंतो ण मुहुत्तअं वि (थ) अहिरमिस्सदि (द)। ता एदं वि मए लक्खिदं (२०)।

नायिका। [सास्रम] हंजे! कुदो अम्हाणं एत्तिओ भाअधेओ!! (२१)

---

दत्तः स्वप्ने। पश्चादपि क्षणमेव प्रविमुक्तकुसुमबाण इव मकरध्वजो भर्तृदारिकया दृष्टः। स ते अस्य सन्तापस्य कारणं, येनैतत् स्वभावशीतलमपि चन्दनलतागृहं न ते सन्तापदुःखमपनयति।

(१९) चतुरिकया लक्षिताऽस्मि। सत्यं हञ्जे! चतुरिका खलु त्वम्। किं ते अपरं प्रच्छाद्यते, तत् कथयिष्यामि।

(२०) भर्तृदारिके! इदानीमेव कथितम्; किं बहुना प्रलपितेन, अलं सम्भ्रमेण। मा सन्तप्यस्व। यद्यहं चतुरिका, तदा सोऽपि भर्तृदारिकाम् अपेक्षमाणो न मुहूर्त्तमप्यभिरंस्यते। तदेतदपि मया लक्षितम्।

(२१) हञ्जे! कुतोऽस्माकमेतावद्भागधेयम्!!

---

(थ) पश्चादपि क्षणदर्शनानन्तरमपीत्यर्थः। प्रविमुक्तेति।—प्रविमुक्ताः प्रक्षिप्ताः, कुसुमबाणाः येन तादृशः, मकरध्वजः कन्दर्प इव, एष जीमूतवाहन इति भेदः।

(त) सम्भ्रमेण आवेगेनेत्यर्थः, उत्कण्ठयेति यावत्।

(थ) अत्र "णिव्वुदि" (निर्वृत्ति) इति क्वचिदधिकः पाठो दृश्यते।

(द) न अभिरंस्यते न सुखमनुभविष्यतीत्यर्थः।

चेटी। भट्टदारिए! मा एव्वं भण। किं महुसूअणो विअ वच्छत्थलेण लच्छिं अणुव्वहंतो णिव्वुदो भोदि? (२२) (ध)

नायिका। किं सुअणो पिअं वज्जिअ अण्णं भणिदुं जाणादि? सहि! अदो वि मे संदावो अहिअदरं बाधेदि, जं सो महाणुभाओ वाआमेत्तएण वि मए ण संभाविदो। सो वि अकिदपडिवत्ती अदक्खिणेत्ति (न) मं संभावइस्सदि (२३) [इति रोदिति]। (प)

चेटी। भट्टदारिए! मा रोद। अहवा कहं ण रोइस्सदि? अहिओ से हिअअस्स संदावो अहिअदरं बाधेदि। ता किं दाणीं एत्थ करइस्सं? ता जाव चंदणलदापल्लवरसं से हिअए दाइस्सं (फ)। [उत्थाय चन्दनपल्लवं गृहीत्वा निष्पीड्य हृदये ददाति]। भट्टिदारिए! णं भणामि, मा रोद; अअं क्खु ईरिसो

---

(२२) भर्तृदारिके! मैवं भण। किं मधुसूदन इव वक्षःस्थलेन लक्ष्मी-मनुद्वहन् निर्वृतो भवति?

(२३) किं सुजनः प्रियं वर्जयित्वा अन्यत् भणितुं जानाति? सखि! अतोऽपि मे सन्तापोऽधिकतरं बाधते, यत् स महानुभावो वाङ्मात्रेणापि मया न सम्भावितः। सोऽप्यकृतप्रतिपत्तिरदक्षिणेति मां सम्भावयिष्यति।

(२४) भर्तृदारिके! मा रुदिहि। अथवा कथं न रोदिष्यति? अधिको-ऽस्या हृदयस्य सन्तापोऽधिकतरं बाधते। तत् किमिदानीमत्र करिष्ये? तत् यावत् चन्दनलतापल्लवरसमस्या हृदये दास्ये। भर्तृदारिके! ननु भणामि, मा

---

(ध) अनुद्वहन् न धारयन्। निर्वृतः सुखी; यथा नारायणः लक्ष्मीमन्तरेण सुखी न भवति, तथा सोऽपि त्वां विना सुखी न भवेदिति भावः।

(न) अकृतप्रतिपत्तिः अकृतसत्कारः। अदक्षिणा अनुदारा, शाठ्यकारिणीत्यर्थः।

(प) एतेनास्या धृति-क्षोभात् उन्मादरूपं दशावस्थं कथितम्।

(फ) [अत्र सखीवत्याः शान्तिधार्येण चेट्या अपि शान्तिलाभसम्भावनया क्रियाफलस्य कर्त्रर्थं विवक्षितत्वात् "करिष्ये" इत्यत्र "दास्ये" इत्यत्र च आत्मनेपदम्]।

चंदणरसो इमेहिं श्रणवरदपडंतेहिं वाहविंदूहिं उण्हीकिदो ण दे हिअअस्स एदं संदावं श्रवणेदि। (२४)

[कदलीपत्रमादाय वीजयति]। (ब)

नायिका। [हस्तेन निवारयति] सहि! मा वीजेहि। उण्हो क्खु एसो कअलीदलमारुदो। (२५)

चेटी। भट्टिदारिए! मा इमस्स दोसं करेहि। तुमं चिअ चंदणपल्लवसंसग्गसीदलं इमं णीसासेहिं पपंचिअ (भ) कअलीदलमारुदं उण्हं करेसि। (२६)

नायिका। [सास्रम्] सहि! अत्थि कोवि इमस्स संदावस्स उवसमोवाओ? (२७) (म)

चेटी। भट्टिदारिए! अत्थि, जदि सो एत्थ आअच्छदि। (२८)

---

हरति। अयं खल्वेष चन्दनरस एभिरनवरतपतद्भिर्बाष्पविन्दुभिरुष्णीकृतो न ते हृदयस्य एतं सन्तापमपनयति।

(२५) सखि! मा वीजय। उष्णः खल्वेष कदलीदलमारुतः।

(२६) भर्तृदारिके! मा अस्य दोषं कथय। त्वं चितचन्दनपल्लवसंसर्गशीतलम् इमं निश्वासैः प्रपञ्च्य कदलीदलमारुतम् उष्णं करोषि।

(२७) सखि! अस्ति कोऽपि अस्य सन्तापस्योपशमोपायः?

(२८) भर्तृदारिके! अस्ति, यदि सोऽत्रागच्छति।

---

(ब) एतेन व्याधिरूपा दशा प्रकटिता।

(भ) चितेति।—चितस्य ग्रथात् सङ्गृहीतस्य, तत्क्षणचितत्वेन सरसस्येति यावत्, चन्दनपल्लवस्य संसर्गेण सम्पर्केण, शीतलं कदलीदलमारुतं कदलीपत्रवातं, निश्वासैः उष्णैरिति भावः प्रपञ्च्य संवर्ध्य, अनेन सह तव दीर्घमुष्णञ्च निश्वासं संयोज्येत्यर्थः।

(म) एतेन प्रकारान्तरेण उन्मादावस्था दर्शिता।

[ ततः प्रविशति नायको विदूषकश्च ]।

नायकः ।—

व्याहृत्यैव सितासितेक्षणरुचा तानाश्रमे शाखिनः
कुर्वन्त्या विटपावसक्तविलसत्कृष्णाजिनौघानिव ।
यद्दृष्टोऽस्मि तया मुनेरपि पुरस्तेनैवमभ्याहते
पुष्पेषो ! भवता मुधैव किमिति क्षिप्यन्त एते शराः ? ॥१॥

विदूषकः । भो वअस्स ! कहिं क्खु दे गदं तं धीरत्तणं ? ( २८ )

( २८ ) भो वयस्य ! कुत्र खलु ते गतं तत् धीरत्वम् ?

"आदौ वाच्यः स्त्रिया रागः पुंसः पश्चात् तदिङ्गितैः" इत्यलङ्कारशास्त्रोक्तेः आदौ नायिकारागं वर्णयित्वा इदानीं नायकानुरागं वर्णयति, व्याहृत्येति ।— पुष्पेषो ! हे कुसुमशर ! [ महान्तो राजचक्रवर्त्तिनो वीरपुरुषा वज्रादपि कठोराणि अस्त्राणि आयुधानि सन्धार्य्य शत्रून् जेतुं दुःखमनुभवन्ति, भवांस्तु अतिकोमलैः पञ्चसङ्ख्याकैरेव बाणैः तादृशान् वीरघातकान् अपि वीरान् अनायासेन वशीकृतवान् इत्यहो ! ते सामर्थ्यं कौशलं वा, इति पुष्पेषुपदशक्त्युद्भवो ध्वनिः ] मुनेरपि, न त्वसंयतेन्द्रियस्य सम्माननानर्हस्य विषयिण इति भावः, पुरः अग्रतः, न तु दूरे इति भावः, तया कान्तया, सितस्य अवदातस्य, ( "अवदातः सितो गौरः" इत्यमरः ) असितस्य नीलस्य, यत् ईक्षणं नेत्रं, तस्य रुचा कान्त्या, आश्रमे तान् शाखिनः वृक्षान्, विटपेषु शाखासु, अवसक्ताः संलग्नाः, तथा विलसन्तः स्फुरन्तः, कृष्णाजिनानां कृष्णसारचर्मणाम्, ओघाः सङ्घाताः येषां तथाविधान् कुर्वन्त्या इव सत्या [ इत्युत्प्रेक्षा ], व्याहृत्य परावृत्य, मुखमिति शेषः, साचि वक्रम् ; साचीति वक्रमित्यर्थे अव्ययम् ; ( "दासे कृतागसि भवत्युचितः प्रभूणां पादप्रहार इति सुन्दरि ! नास्मि दूये" इति दर्शनात् ) दृष्टो यत्, तेन परावृत्य दर्शनेन एव, एवम् इत्थम्, अभ्याहते ताडिते, कटाक्षबाणप्रहते इति भावः, मयीति शेषः, भवता मुधैव व्यर्थमेव, किमिति कथम्, एते शराः क्षिप्यन्ते ? पात्यन्ते ? अपरेण प्रहते प्रहारो न वीरधर्मः, न युक्तश्च इति भावः । [ अत्र कामबाणपतनवैफल्यहेतुभूतस्य नयनबाणप्रहारस्य वाक्यगतत्वात् काव्यलिङ्गमलङ्कारः ; तदेतयोरुत्प्रेक्षा-काव्यलिङ्गयोः संसृष्टिः ]। शार्दूलविक्रीडितं वृत्तम् ॥ १ ॥

माधवः। वयस्य ! ननु सुधीर एवास्मि, कुतः ?—

नीताः किं न निशाः शशाङ्कधवलाः ? नाघ्रातमिन्दीवरम् ?
किं नोन्मीलितमालतीसुरभयः सोढाः प्रदोषानिलाः ? ।
झङ्कारः कमलाकरे मधुलिहां किं वा मया न श्रुतः ?
निर्व्याजं विधुरेष्वधीर इति मां येनाभिधत्ते भवान् ? ॥ २ ॥

[ विचिन्त्य ] अथवा मृषा नाभिहितं, वयस्यातेय ! नन्वधीर एवास्मि—

स्त्रीहृदयेन न सोढाः क्षिप्ताः कुसुमेषवोऽप्यनङ्गेन ।
येनाद्यैव पुरस्तव वदामि धीर इति स कथमहम् ? ॥३॥

---

धीरतां प्रकटयति, नीता इति ।—शशाङ्कधवलाः ( शशाङ्कशब्देन लक्षणया तत्किरणो बोध्यः ) । चन्द्रकिरणोज्ज्वलाः, निशाः रजन्यः, किं न नीताः ? नातिवाहिताः ? अपि तु अतिवाहिता एवेत्यर्थः, इति काकुः । मयेति सर्वत्र योज्यम् । इन्दीवरं नीलोत्पलं, न आघ्रातम ? अपि तु आघ्रातमेवेत्यर्थः । उन्मीलिता विकसिताः, या मालत्यः मालतीलताकुसुमानि, [ मालत्याः कुसुमानि इति "पुष्पमूलेषु बहुलम्" ( वा० ) इति तद्धितलुकि स्त्रीत्वम । "पुष्पे जातीप्रभृतयः स्वलिङ्गा व्रीहयः फले" इत्यमरः ) ताभिः सुरभयः सुगन्धाः, प्रदोषानिलाः निशामुखवायवः, किं न सोढाः ? अपि तु सोढा एवेत्यर्थः । कमलाकरे सरसि, ( "पद्माकरस्तडागोऽस्त्री कासारः सरसी सरः" इत्यमरः ) मधुलिहां भ्रमराणां, झङ्कारः ध्वनिविशेषः, किं वा न श्रुतः ? अपि तु श्रुत एवेत्यर्थः । येन भवान् मां विधुरेषु कातरेषु, अधीरेषु मध्ये इत्यर्थः, [ निर्द्धारे सप्तमी ] अधीर अधीरतम इत्यर्थः, ( इति-योगे प्रथमा ) इति निर्व्याज निष्कपटं स्वच्छन्दमित्यर्थः, अभिधत्ते ? कथयति ? एतावति धीरत्वेऽपि मम अधीरत्वकथनमयुक्तमिति भावः । [ अत्र विद्यमानेष्वधीरतानिदानेषु चन्द्रिकोज्ज्वलनिशादिषु सुखेन तदतिवाहनादिभिः स्वस्य धीरताप्रतिपादनरूपवस्तुना एवंविधसहिष्णुतयाऽस्य कातरताऽतिशयरूपं वस्तु व्यज्यते इत्यर्थशक्त्युद्भवो वस्तुध्वनिः । एतेन च धैर्यरूपसत्त्वजः पौरुषो गुणो व्याख्यातः । यथा दर्पणे—"व्यवसायादचलनं धैर्यं विघ्ने महत्यपि" इति । अपि च जागररूपा चतुर्थी कामदशा प्रकटिता । किञ्च, "किम" इति काकुवशात "अपि तु नीता एव" इत्याद्यर्थस्य व्यङ्ग्यतया काव्यस्यास्य काकाक्षिप्तगुणीभूतव्यङ्ग्यत्वं बोध्यम् ] । शार्दूलविक्रीडितं वृत्तम ॥ २ ॥

स्वस्य अधीरतामेव प्रकटयन्नाह, स्त्रीहृदयेनेति ।—स्त्रियाः कान्तायाः, हृदयं यस्य,

विदूषकः। [आत्मगतम्] एव्वमधीरत्तणं पडिवज्जंतेण आचक्खिदो महांतो अणेण हिअअस्स आवेगो, ता जाव, कहिं ज्जेव्व एदं अवक्खिवामि [प्रकाशम्] भो वअस्स! कीस उण अज्ज तुमं वहुं ज्जेव्व गुरुअणं सुस्सूसिअ इध आअदो? (२०) (य)

नायकः। वयस्य! स्थाने प्रश्नः, कस्य वाऽन्यस्यैतत् कथनीयम्? अद्य खलु स्वप्ने जानामि—सैव प्रियतमा [अङ्गुल्या निर्दिशन्] अत्र चन्दनलतागृहे चन्द्रकान्तमणिशिलायामुपविष्टा प्रणयकुपिता किमपि मामुपालभमानेव रुदती मया

(२०) एवमधीरत्वं प्रतिपद्यमानेन आख्यातो महानेन हृदयस्यावेगः, तत् यावत् कुत्रैव एतम् अपक्षिपामि। भो वयस्य! कथं पुनरद्य त्वं बह्वेव गुरुजनं शुश्रूषित्वा इहागतः?

---

स्यो हृदये यस्य इति वा तेन स्नेहृदयेन कान्तागतमनसा, येन, मयेति कर्तृपदमध्याहार्येम, अनङ्गेन [अङ्गहीनत्वात् अधीरेण इति ध्वनिः] चिताः, न तु समुत्थोत्कृष्य पातिताः इति भावः, कुसुमैरपि अतिकोमलाः पुष्पमयाः शरा अपि, न तु वज्रसारसायका इति भावः, न सोढाः, सः असोढपुष्पशरः, अहम् अद्यैव, न तु पूर्वं कदाचित् इति भावः, तव निकट्य, न तु दिवतः इति भावः, पुरः अग्रतः, न तु परोक्षम् इति भावः, धीरः, अहमिति शेषः, इति कथं वदामि? त्वत्समीपे मम धीरत्वप्रकटनमयुक्तमिति निर्गलितार्थः। [धीर इत्यत्र इति-योगे प्रथमा विभक्तिः। एतेन क्रमशावस्था पञ्चमी कामदशा कथिता]। आर्या वृत्तम् ॥ २ ॥

(य) अधीरत्वं प्रतिपद्यमानेन प्राप्नुवता, अधीरेण सतेत्यर्थः। आख्यातः कथितः, ["आचष्टः" इति संस्कृतानुवादस्तु प्रामादिक एव, कथनार्थकस्य चक्ष-धातोः ख्याऽऽदेशात्] आवेगः उत्कण्ठा। अपक्षिपामि कस्मिन्नपि विषये एनं व्याक्षिप्तहृदयं करोमि, येनास्य विस्मरणेन कथमपि विरहवर्णं विनोदः स्यादिति भावः। बह्वेव त्वरितमेव।

दृष्टो; तदिच्छामि स्वप्नानुभूतदयितासमागमरम्ये अस्मिं-श्चन्दनलतागृहे दिवसशेषं समतिवाहयितुम्। तदेहि, गच्छावः। (र) [परिक्रामतः]

चेटी। [कर्णं दत्त्वा सशङ्कम्] भट्टिदारिए! पदसद्दो विअ। (११)

नायिका। [सशङ्कमात्मानं पश्यन्ती] हञ्जे! मा ईरिसं आआरं पेक्खिअ कोवि मे हिअअं तुलइस्सदि। (ल) ता उट्ठेहि, इमिणा रत्तासोअपादवेण अंतरिदाअ पेक्खम्ह दाव को एसो त्ति। (१२) [तथा कुरुतः]।

विदूषकः। एदं चंदणलदाघरअं। ता एहि पविसम्ह। (१३) [नाट्येन प्रविशतः]।

नायकः।—

चन्दनलतागृहमिदं सचन्द्रमणिशिलमपि प्रियं न मम।
चन्द्राननया रहितं चन्द्रिकया मुखमिव निशायाः॥ ४॥

चेटी। [दृष्ट्वा] भट्टिदारिए! दिट्ठिआ वड्ढसि। सो ज्जेव्व णं दे हिअअवल्लहो जणो। (१४)

(११) भर्तृदारिके! पदशब्द इव।

(१२) हञ्जे! मा ईदृशमाकारं प्रेक्ष्य कोऽपि मे हृदयं तुलयिष्यति। तदुत्तिष्ठ, अनेन रक्ताशोकपादपेन अन्तरिते प्रेक्षावहे तावत् क एष इति।

(१३) इदं चन्दनलतागृहम्। तदेहि प्रविशाव:।

(१४) भर्तृदारिके! दिष्ट्या वर्द्धसे। स एव ननु ते हृदयवल्लभो जनः।

(र) प्रश्नः. स्थाने युक्तः, प्रश्नकरणं नानुचितमित्यर्थः, (स्थाने इत्यव्ययं, "युक्ते द्वे साम्प्रतं स्थाने" इत्यमरः)। प्रणयेन प्रेम्णा हेतुना कुपिता। उपालभमानेव तिरस्कुर्वतीव। स्वप्नेति।—स्वप्ने अनुभूता या दयिता प्रिया, तस्याः समागमेन समुपस्थित्या, रम्यं रमणीयं तस्मिन्।

(ल) तुलयिष्यति परिमास्यति, हृदयस्य दुर्बलतां ज्ञास्यतीत्यर्थः, [तुलाशब्दात् तत्करोतीत्यर्थे णिच्, भविष्यति प्रथमपुरुषैकवचनम्]।

चन्दनलतागृहं शून्यं पश्यन्नाह, चन्दनेति।—चन्द्रिकया ज्योत्स्नया, रहितं

नायिका । जुज्जदि एदं । किं उण पणअकुविदं पिअअणं हिअए करिअ मन्तेदि । (४२)

चेटी । भट्टिदारिए ! मा ईरिसिं संकं करेहि, पुणोवि दाव सुणम्ह । (४३)

विदूषकः । [आत्मगतम्] । अहिरमदि एसो एदाए कधाए, भोदु, एदं ज्जेव्व वट्टाइस्सं । (ष) [प्रकाशम्] भो वअस्स ! तदा सा तुए रुदन्ती किं भणिदा ? (४४)

नायकः । वयस्य ! इदमुक्ता—

निष्यन्दत इवानेन मुखचन्द्रोदयेन ते ।
एतत् वाष्पाम्बुना सिक्तं चन्द्रकान्तशिलातलम् ॥ ६ ॥

नायिका । [सरोषम्] चदुरिए ! अत्थि किं अदो वि अवरं सोदव्वं ? ता एहि, गच्छम्ह अस्सादो । (४५)

---

(४२) युज्यते एतत् । किं पुनः प्रणयकुपितं प्रियजनं हृदये कृत्वा मन्त्रयति ।

(४३) भर्तृदारिके ! मा ईदृशीं शङ्कां कुरुष्व, पुनरपि तावत् शृणुवः ।

(४४) अभिरमते एष एतया कथया, भवतु, एतामेव वर्तयिष्यामि । भो वयस्य ! तदा सा त्वया रुदती किं भणिता ?

(४५) चतुरिके ! अस्ति किमतोऽप्यपरं श्रोतव्यम् ? तदेहि, गच्छावोऽस्मात् ।

---

(ष) अभिरमते अनुष्यति । वर्तयिष्यामि अवलम्बिष्ये इत्यर्थः, एतामेव कथामवलम्ब्य आलपिष्यामीति यावत् ।

आत्मनः प्रियां प्रति उक्तिमाह, निष्यन्दते इति ।—वाष्पाम्बुना नेत्रवारिणा, सिक्तम् एतत् चन्द्रकान्तशिलातलं ते तव, अनेन मुखचन्द्रोदयेन निष्यन्दते इव स्रवतीव ; चन्द्रोदये चन्द्रकान्तमणिः स्रवतीति प्रसिद्धेरिति भावः । [अप्राणि-कर्तृकत्वात् निष्यन्दते इत्यत्र पदम् । उत्प्रेक्षाऽलङ्कारः, स च रूपकेणानु-प्राणितः ] ॥ ६ ॥

चेटी। [हस्ते गृहीत्वा] भट्टिदारिए! एव्वं मा भण, तुमं ज्जेव्व सिविणए दिट्ठा. ण एदस्स अण्णस्सिं दिट्ठी अहिरमदि। (४६)

नायिका। ण मे हिअअं पत्तिआअदि, ता कहावसाणं जाव पडिपालेम्ह। (४७)

नायकः। वयस्य! जाने, तामेवास्यां शिलायामालिख्य, तया चित्रगतया आत्मानं विनोदयामीति, तदित एव गिरितटान्मनःशिलाशकलानि (स) आदाय आगच्छ।

विदूषकः। जं भवं आणवेदि। [परिक्रम्य गृहीत्वोपसृत्य] भो वअस्स! तुए एक्को वण्णओ आणत्तो, मए उण इध ज्जेव्व सुलहपंचराइणो (ह) वण्णआ आणीदेत्ति; आलिहदु भवं। (४८) [उपनयति]।

नायकः। वयस्य! साधु कृतम्। [गृहीत्वा शिलायामालिखन् सरोमाञ्चम] सखे! पश्य—

अक्लिष्टविम्बशोभाधरस्य नयनोत्सवस्य शशिन इव।
दयितामुखस्य सुखयति रेखाऽपि प्रथमदृष्टेयम्॥ ७॥

[लिखति]।

(४६) भर्तृदारिके! एवं मा भण, त्वमेव स्वप्ने दृष्टा, न एतस्य अन्यस्यां दृष्टिरभिरमते।

(४७) न मे हृदयं प्रत्येति, तत् कथाऽवसानं यावत् प्रतिपालयावः।

(४८) यद्भवान् आज्ञापयति। भो वयस्य! त्वया एको वर्ण आज्ञप्तः, मया पुनरिहैव सुलभपञ्चरागिणो वर्णा आनीता इति; आलिखतु भवान्।

(स) जाने विवेचयामीत्यर्थः। तां स्वप्नदृष्टां प्रियाम्। चित्रगतया चित्रितया विनोदयामि सन्तोषयामि। मनःशिलाशकलानि मनःशिलाख्योपधातुखण्डान्।

(ह) सुलभाः अनायासलभ्याः, ये पञ्च रागाः लोहितादयः पञ्च प्रकाराः वर्णाः, ते एषां सन्तीति सुलभपञ्चरागिणः।

अक्लिष्टेति।—अक्लिष्टस्य सुपक्वस्य, न तु शुष्कस्य, पूतितां गतस्य वा, बिम्बस्य

विदूषकः। [सकौतुकं निर्वर्ण्य] अपच्चक्खेवि एअं णाम रूवं लिहीअदि!! अहो अच्चरिअं!! (४९)

नायकः। [सस्मितम्] वयस्य!—

प्रिया सन्निहितैवेयं सङ्कल्पस्थापिता पुरः।
दृष्ट्वा दृष्ट्वा लिखाम्येनां यदि तत् कोऽत्र विस्मयः? ॥ ८ ॥

नायिका [स्वगतम्] चदुरिए! जाणिदं क्खु कहावसाणं, ता एहि दाव णिस्सावसं पेक्खम्ह। (५०)

---

(४९) अप्रत्यक्षेऽपि एवं नाम रूपं लिख्यते!! अहो आश्चर्यम्!!

(५०) चतुरिके! ज्ञातं खलु कथाऽवसानं, तदेहि तावन्निश्वासं प्रेक्षावहे।

---

तदाख्यफलविशेषस्य, शोभा यस्य तादृशः अधरः यस्य एवंविधस्य, [शशिनि चापि इदं विशेषणं योज्यम्; तत्पक्षे तु—अक्लिष्टा मेघादिभिरनावृता इत्यर्थः, बिम्बस्य मण्डलस्य, ("बिम्बोऽस्त्री मण्डलं त्रिषु" इत्यमरः) या शोभा, तां धरतीति तस्य] नयनयोः उत्सवः आनन्दः यस्मात् तस्य नयनोत्सवस्य नेत्रानन्दिनः, उभयत्र समानम्; दयितायाः प्रियायाः, मुखस्य शशिन इव चन्द्रस्येव, प्रथमदृष्टा सकृदेवावलोकिता, इयं रेखाऽपि, चन्द्रपक्षे तु—प्रथमदृष्टा कृष्णपक्षात् परं द्वितीयातिथौ दृष्टा, रेखा कलामात्राऽपीत्यर्थः, सुखयति आनन्दयति। [यस्य तु रेखामात्रदर्शनात् ईदृशानन्दोत्पत्तिर्भवति, तस्य वस्तुनः सम्पूर्णस्य प्रत्यक्षतो दर्शनोपभोगेन कीदृगानन्दसन्दोहः सञ्जायते तत् न जानीमहे इति ध्वनिः। श्लिष्टोपमाऽलङ्कारः।] आर्या वृत्तम् ॥ ७ ॥

ये खलु केवलं बहिर्दृष्ट्याऽवलोकयन्ति, तेषामेतदाश्चर्यवत् प्रतिभाति, परन्तु अन्तर्दृष्ट्या सदैव हृदयपटे प्रियारूपं प्रत्यक्षवत् पश्यतः तच्चित्राङ्कने न किञ्चिदाश्चर्यम् इत्याह, प्रियेति।—इयं प्रिया पुरः अग्रतः, सङ्कल्पेन मानसकल्पनया, स्थापिता अत एव सन्निहितेव समीपवर्तिन्येव, ततश्च एनां पुरः सङ्कल्पस्थापितामिति भावः, दृष्ट्वा दृष्ट्वा यदि लिखामि तत् तदा, अत्र लिखने, को विस्मयः? किमाश्चर्यम्? नैवाश्चर्यमित्यर्थः। [अत्र मनसि निरन्तरचिन्तितायाः नायिकायाः लिखने तत्सम्मुखस्थापन-प्रत्यवलोकनलिखनादिसम्बन्धेन तत्सम्भवोक्तेरतिशयोक्तिरलङ्कारः] ॥ ८ ॥

चेटी। [सविषादमात्मगतम्]। जीविदणिरवेक्खो विअ से उल्लावो। (क) [प्रकाशम्] भट्टिदारिए! णं गदा ज्जेव्व तहिं मणोहारिआ, ता कदावि भट्टा मित्तावसू इध ज्जेव्व आअच्छदि। (५१)

[ततः प्रविशति मित्रावसुः]।

मित्रावसुः। आज्ञापितोऽस्मि तातेन, यथा—"वत्स मित्रावसो! जीमूतवाहनोऽस्माभिरिहासन्नभावात् सुपरीक्षितोऽयं, कुतोऽस्मात् योग्यो वरः? तदस्मै वत्सा मलयवती प्रतिपाद्यताम्" इति। अहन्तु स्नेहपराधीनतया अन्यदेव किमपि अवस्थान्तरमनुभवामि (ख)। अन्यच्च—

यद्विद्याधरराजवंशतिलकः प्राज्ञः सतां सम्मतो
रूपेणाप्रतिमः पराक्रमधनो विद्वान् विनीतो युवा।
यश्चासूनपि सन्त्यजेत् करुणया सत्त्वार्थमभ्युद्यत-
स्तेनास्मै ददतः स्वसारमतुलां तुष्टिर्विषादश्च मे॥ ९॥

---

(५१) जीवितनिरपेक्ष इवास्या उल्लापः। भर्तृदारिके! ननु गतैव तत्र मनोहरिका, तत् कदाऽपि भर्त्ता मित्रावसुरिहैवागच्छति।

(क) जीवितेति।—जीविते जीवने, निः नास्ति अपेक्षा यस्य सः जीवितनिरपेक्षः जीवनाकाङ्क्षाविरहितः। उल्लापः आलापः, व्याकुलवचनमित्यर्थः, यदि एनं प्रियजनं न प्राप्नोति, तदा जीवितं त्यक्ष्यतीयमिति भावः।

(ख) आसन्नभावात् निकटवर्त्तित्वात्। सुपरीक्षितः सुष्ठु विवेचित इत्यर्थः, वरयोग्यो न वेति भावः। प्रतिपाद्यतां समर्प्यताम्। स्नेहपराधीनतया प्रियतमा वत्सा मलयवती अस्मान् त्यक्त्वा भर्तृगृहं गमिष्यतीति खेदकातरतां गतत्वेनेति भावः।

"कन्या वरयते रूपं माता वित्तं पिता श्रुतम्। बान्धवाः कुलमिच्छन्ति मिष्टान्नमितरे जनाः॥" इति वरविषयकलक्षणानां सर्वेषामेकत्रावस्थानेन जीमूतवाहनस्य सम्पूर्णयोग्यतां तथा अत्यधिकगुणवतः परोपकारनिरतस्य तस्य कदाऽपि कस्याप्युपकारार्थे प्राणपरित्यागसम्भावनया भगिनीदाने दोषमपि प्रदर्शयन्नाह, यदीति।—विद्याधरराजवंशतिलकः प्राज्ञः बुद्धिमान्, सतां साधूनां, सम्मतः समादृतः, रूपेण

श्रुतञ्च, यथा—जीमूतवाहनो गौर्य्याश्रमसमीपे चन्दनलतागृहे वर्त्तते इति, तदेतत् चन्दनलतागृहं यावत् प्रविशामि। [प्रविशति]।

विदूषकः। [ससम्भ्रममवलोक्य] भो वअस्स! पच्छादेहि इमिणा कअलीवत्तेण इमं चित्तगदं कण्णअं, एसो क्खु सिद्धजुवराओ मित्तावसू इध आअदो कदावि पेक्खिस्सदि। (५२)

नायकः। [कदलीपत्रेण प्रच्छादयति]।

मित्रा। [प्रविश्य] कुमार! मित्रावसुः प्रणमति।

नायकः। [दृष्ट्वा] मित्रावसो! स्वागतम्? इतः स्थीयताम्।

चेटी। भट्टिदारिए! आअदो भट्टा मित्तावसू। (५३)

नायिका। हञ्जे! पिअं मे। (५४)

नायकः। मित्रावसो! अपि कुशलो सिद्धराजो विश्वावसुः?

मित्रा। कुशली। तातसन्देशेनास्मि त्वत्सकाशमागतः।

---

(५२) भो वयस्य! प्रच्छादय अनेन कदलीपत्रेण इमां चित्रगतां कन्यकाम्, एष खलु सिद्धयुवराजो मित्रावसुरिहागतः कदाऽपि प्रेक्षिष्यते।

(५३) भर्तृदारिके! आगतो भर्त्ता मित्रावसुः।

(५४) हञ्जे! प्रियं मे।

अप्रतिमः अतुल्यः, पराक्रमवान् महावीर इत्यर्थः, विद्वान् पण्डितः, विनीतः विनयसम्पन्नः, युवा इति यत, तथा करुणया अनुकम्पया, अस्मदर्थे प्राणिरक्षार्थम्, अभ्युद्यतः उद्युक्तः सन्, असून् प्राणानपि, उत्सृजेत् त्यक्तुं शक्नुयादिति च यत, तेन उत्साहविशेषेण हेतुना, अस्मै जीमूतवाहनाय, अतुल्यां निरुपमां, स्वसारं भगिनीं, ददतो मे मम, तुष्टिः हर्षः, विषादश्च, भवतीति शेषः; अतिसुपात्रे अस्मिन् भगिनीदानात् हर्षः, कस्यापि जीवनाय स्वजीवनदानसम्भावनया भगिन्या वैधव्यापत्तिरिति विषाद इति भावः। [एवं भगिनीदाने तुष्टि-विषादयोर्युगपत् समावेशात् प्रतिभातो विरोधभासः, गुणवत्त्वादिदर्शनात् तुष्टिः मरणसम्भावनया च विषाद इति तत्परिहारात् विरोधालङ्कारः इति]। शार्दूलविक्रीडितं वृत्तम् ॥ ९ ॥

नायकः। किमाह तत्रभवान्? (ग)

नायिका। सुणिस्सं दाव, किं तादेण कुसलं संदिट्ठं त्ति। (५५)

मित्रा [ सानन्दम् ] (घ) इदमाह—"तात! अस्ति मे मलयवती नाम कन्या जीवितमिवास्य सर्वस्यैव सिद्धराजान्वयस्य, सा मया तुभ्यं प्रतिपाद्यते, प्रतिगृह्यताम्" इति।

चेटी। [ विहस्य ] भट्टिदारिए! किं ण कुप्पसि दाणीं? (५६)

नायिका। [ साकूतं सलज्जञ्च अधोमुखी स्थिता ]। हंजे! मा हस, किं विसुमरिदं दे एदस्स अण्णहिअअत्तणं? (५७)

नायकः। [ अपवार्य्य ] वयस्य! सङ्कटे पतिताः स्मः।

विदूषकः। [ अपवार्य्य ] भो! जाणामि, ण तं वज्जिअ दे अण्णेहिं चित्तं अभिरमदि जधा, तधा जं किंवि भणिअ विसज्जीअदु एसो। (५८) (ङ)

नायिका। [ सरोषमात्मगतम् ] हदास! को वा एदं ण आणादि। (५९)

(५५) श्रोष्यामि तावत्, किं तातेन कुशलं सन्दिष्टमिति।

(५६) भर्त्तृदारिके! किं न कुप्यसीदानीम?

(५७) हञ्जे! मा हस, किं विस्मृतं ते एतस्यान्यहृदयत्वम?

(५८) भोः! जानामि, न तां वर्जयित्वा ते अन्यत्र चित्तमभिरमते यथा, तथा यत् किमपि भणित्वा विसर्ज्यतामेषः।

(५९) हताश! को वा एतन्न जानाति।

(ग) तत्रभवान् पूजनीयः, ("त्रिषु तत्रभवान् पूज्यस्तथैवात्रभवानपि" इत्यमरः)।

(घ) विवाहानन्तरं कन्यायाः पतिगृहगमनजनितविरहसम्भावनया अश्रुपातः सञ्जातः।

(ङ) तां मलयवतीम्। न अभिरमते न तुष्यति। एष मित्रावसुः।

नायकः। क इह नेच्छेत् भवत्या सह श्लाघ्यमीदृशं सम्बन्धम्? किन्तु न शक्यते चित्तमन्यतः प्रवृत्तमन्यतः प्रवर्त्तयितुं, ततो नाहमेनां प्रतिग्रहीतुमुत्सहे। (च)

नायिका। [मूर्च्छां नाटयति]।

चेटी। समस्ससदु समस्ससदु भट्टिदारिआ। (१०)

विदूषकः। भो! पराधीणो क्खु एसो, किं एदिणा अब्भत्थिदेण? (छ) ता गुरुअणं से गदुअ अब्भत्थेहि। (११)

मित्रा। [आत्मगतम्] साधूक्तम्; नायं गुरुजनमतिक्रामति, एष गुरुरप्यस्मिन्नेव गौर्य्याश्रमे प्रतिवसति, तत् यावद्गत्वा अस्य पिता मलयवतीं ग्राहयामि। (ज)

नायिका। [समाश्वसिति]।

मित्रा। एवं निवेदितात्मनोऽस्मान् प्रत्याचक्षाणः (झ) कुमार एव बहुतरं जानाति।

(१०) समाश्वसितु समाश्वसितु भर्तृदारिका।

(११) भोः! पराधीनः खलु एषः, किमनेनाभ्यर्थितेन? तत् गुरुजनमस्य गत्वा अभ्यर्थय।

(च) श्लाघ्यं प्रशंसनीयम्। ईदृशं सम्बन्धं वैवाहिकमित्यर्थः। अन्यतः अन्यस्मिन् विषये, प्रवृत्तं चित्तम् अन्यतः ततोऽपि अन्यस्मिन् विषये, प्रवर्त्तयितुं निवेशयितुं, न शक्यते। न उत्सहे न उत्साहितोऽस्मि।

(छ) अभ्यर्थितेन प्रार्थितेन, अयं प्रार्थितोऽपि गुरुवचनमन्तरेण किमपि कर्त्तुं न शक्ष्यतीति भावः।

(ज) अतिक्रामति उल्लङ्घयतीत्यर्थः। पिता मलयवतीं ग्राहयामि, एनमिति शेषः, [अत्र प्रयोजककर्त्तुः पितेति पदस्य पुनः प्रयोज्यरूपेण परिणमनात् न कर्मत्वम्]।

(झ) निवेदितः विज्ञापितः, आत्मा स्वरूपं यैस्तान्, अस्मान् प्रत्याचक्षाणः निराकुर्वन्, [चक्ष्-धातोः शानच्-प्रत्ययः]।

नायिका। [सरोषं विहस्य] कहं पच्चाक्खाणलहू (ञ) मित्तावसू पुणो वि मंतेदि !! (६२)

मित्रावसुः। [निष्क्रान्तः]।

नायिका। [सास्रमात्मानं पश्यन्ती आत्मगतम्] किं मम एदिणा दोहग्गकलंकमइलेण अच्चंतदुक्खभाइणा अज्जवि सरीरेण धारिदेण? ता इध ज्जेव असोअपादवे इमाए अदिमुत्तलदाए उब्बंधिअ अत्ताणं वावादइस्सं, (ट) ता एदं एव्वं दाव। [प्रकाशं विलक्षस्मितेन] हंजे! पेक्ख दाव मित्तावसू गदो ण वेत्ति, जेण अहं वि इदो गमिस्सं। (६३)

चेटी। [कतिचित् पदानि गत्वा अवलोक्य आत्मगतम्]। असारिसं से हिअअं पेक्खामि, ता ण गमिस्सं। इध ज्जेव ओवारिदा पेक्खामि, किं एसा पडिवज्जदि त्ति। (६४) (ठ)

---

(६२) कथं प्रत्याख्यानलघुर्मित्रावसुः पुनरपि मन्त्रयति !!

(६३) किं मम एतेन दौर्भाग्यकलङ्कमलिनेन अत्यन्तदुःखभागिना अद्यापि शरीरेण धारितेन? तदिहैव अशोकपादपे अनया अतिमुक्तलतया उद्बध्य आत्मानं व्यापादयिष्यामि, तदिदमेवं तावत्। हञ्जे! प्रेक्षस्व तावत् मित्रावसुर्गतो न वेति, येन अहमपि इतो गमिष्यामि।

(६४) अन्यादृशमस्या हृदयं प्रेक्षे, तन्न गमिष्यामि। इहैवापवारिता प्रेक्षे, किमेषा प्रतिपद्यते इति।

(ञ) प्रत्येति।—प्रत्याख्यानेन निराकरणेन, लघुः हीनः, अवमानित इत्यर्थः।

(ट) दौर्भाग्येति।—दौर्भाग्यं दुर्भगत्वम् एव, प्रियप्रत्याख्यानरूपमिति भावः, कलङ्कः, तेन मलिनं तेन। अतिमुक्तलतया माधवीलतया, ("अतिमुक्तः पुण्ड्रकः स्यात् वासन्ती माधवीलता" इत्यमरः)। व्यापादयिष्यामि मारयिष्यामि।

(ठ) अन्यादिव दृश्यते इति अन्यादृशं विकृतिं गतमित्यर्थः, जीवितनिरपेक्षमिति यावत्। किं प्रतिपद्यते किं करोतीत्यर्थः।

नायिका। [दिशोऽवलोक्य पाशं गृहीत्वा सास्रम्] भअवदि गोरिए! तुए इध ण किदो पसादो, (ड) ता जम्मंतरे जधा ण ईरिसी दुक्खभाइणी होमि, तधा करेसि। (६५)
[इत्यभिधाय कण्ठे पाशमर्पयति]। (ढ)

चेटी। [दृष्ट्वा ससंभ्रममुपसृत्य] परित्ताअदु परित्ताअदु अज्जो, एसा भट्टदारिआ उब्बंधिअ अत्ताणअं वावादेदि। (६६)

नायकः। [ससंभ्रममुपसृत्य] क्वासौ? क्वासौ?

चेटी। इअं असोअपादवे। (६७)

नायकः। [सहर्षमवलोक्य] सैवेयमस्मन्मनोरथभूमिः!! (ण)
[नायिकायाः पाणौ गृहीत्वा लतापाशमाक्षिपति]।—

न खलु न खलु मुग्धे! साहसं कार्य्यमीदृक्
व्यपनय करमेतं पल्लवाभं लतायाः।
कुसुममपि विचेतुं यो न मन्ये समर्थः
कलयति स कथं ते पाशमुद्बन्धनाय? ॥ १० ॥

---

(६५) भगवति गौरिके! त्वया इह न कृतः प्रसादः, तत् जन्मान्तरे यथा न ईदृशी दुःखभागिनी भवेयं, तथा कुरुष्व।

(६६) परित्रायतां परित्रायतामार्यः, एषा भर्तृदारिका उद्बध्य आत्मानं व्यापादयति।

(६७) इयमशोकपादपे।

(ड) इह अस्मिन् जन्मनि। प्रसादः अनुग्रहः।

(ढ) एतेनात्र मरणदशा सूच्यते—"रसविच्छेदहेतुत्वान्मरणं नैव वर्ण्यते। जातप्रायन्तु तत् वाच्यं चेतसाऽऽकाङ्क्षितं तथा॥" इति अलङ्कारशास्त्रोक्तेः।

(ण) अस्मदिति।—अस्माकं मनोरथस्य वाञ्छायाः, भूमिः स्थानं, विषय इत्यर्थः। [अत्र अस्मदो न मदादेशः, एकत्वे एव तस्य विधानात्। इह तु अस्मद एकत्वेऽपि अविवक्षितत्वात् बहुवचनम्]।

नेति।—मुग्धे! हे सुन्दरि! ("मुग्धस्तु सुन्दरे मूढे" इति मेदिनी) ईदृक् साहसम् अविमृश्यकारित्वं, न खलु न खलु [सम्भ्रमे द्विरुक्तिः] नैव, कार्य्यं कर्त्तव्यं,

नायिका। [सबाष्पम्] हञ्जे! को उण एसो? [निरूप्य सरोषं हस्तमाक्षेप्तुमिच्छति] मुंच मुंच अग्गहत्थं, को तुमं णिवारेदुं? मरणे वि किं तुमं ज्जेव्व अब्भत्थणीओ? (९८) (त)

नायकः।—

कण्ठे हारलतायोग्ये येन पाशस्त्वयाऽर्पितः।
गृहीतः सापराधोऽयं कथं ते मुच्यते करः? ॥ ११ ॥

विदूषकः। भोदु, किं उण से इमस्स मरणव्ववसाअस्स (थ) कारणं? (९९)।

---

(९८) हञ्जे! कः पुनरेषः? मुञ्च मुञ्चाग्रहस्तं, कस्त्वं निवारयितुम्? मरणेऽपि किं त्वमेवाभ्यर्थनीयः?

(९९) भवतु किं पुनरस्या अस्य मरणव्यवसायस्य कारणम्?

---

त्यजेति शेषः। एतं पल्लवाभं किसलयनिभं, करं लतायाः उद्बन्धनपाशरूपायाः सकाशात् इत्यर्थः, व्यपनय अपसारय। ते यः, करः इति शेषः, कुसुममपि विचेतुं न समर्थ इति मन्ये, स ते करः, कथम् उद्बन्धनाय पाशं कलयति? गृह्णाति? [धातूनामनेकार्थत्वात् कलतिरत्र ग्रहणार्थः। "कलतिः कामधेनुः" इत्याचक्षते आचार्या अपि। अत्र करस्य कुसुमचयनासमर्थत्वसम्भावनया उत्प्रेक्षाऽलङ्कारः, तथा "पल्लवाभम्" इत्युपमा, तदनयोः संसृष्टिः]। मालिनी वृत्तं—"न-न-म-य-ययुतेयं मालिनी भोगिलोकैः" इति लक्षणात् ॥ १० ॥

(त) अभ्यर्थनीयः? प्रार्थनीयः? प्राणत्यागकालेऽपि किं भवन्मतं पालनीयम्? इत्याशयः। [एतेन जीवने एव त्वम् अभ्यर्थनीय आसीः, यदाहं म्रिये, तदा किं त्वदभ्यर्थनया? इत्यर्थो ध्वन्यते]।

कण्ठे इति।—त्वया येन करेण, हारलतायोग्ये मुक्ताहारोचिते, कण्ठे पाशः अर्पितः, सापराधः कृतदोषः, कण्ठे पाशदानादिति भावः, अत एव गृहीतः धृतः, मयेति शेषः, ते तव, अयं करः कथं मुच्यते? त्यज्यते? अहम् अवश्यमेव ते पाणिपीडनं करिष्यामि, अपराधिनो दण्डार्हत्वादिति भावः। [अत्र पाणिपीडन-शब्दस्य उद्वाहशब्दपर्यायगतत्वात् मलयवतीसमीपे जीमूतवाहनस्य विवाह-स्वीकारोक्तिर्ध्वन्यते। अपि च करग्रहणाभिनिवेशः कण्ठे पाशार्पणरूपं दोषं वाक्यार्थ-गतहेतुकत्वेन प्रकाशित इति काव्यलिङ्गालङ्कारः] ॥ ११ ॥

(थ) मरणव्यवसायस्य मरणोद्योगस्य।

चेटी। णं एसो ज्जेव्व दे पिअवअस्सो। (७०)

नायकः। कथम्!! अहमेवास्या मरणकारणम्!! न खल्ववगच्छामि।

विदूषकः। भोदि! कहं विअ? (७१)

चेटी। [साकूतम्] जा सा पिअवअस्सेण दे कावि हिअअवल्लहा सिलाअले आलिहिदा, ताए पक्खवादिणा एदेण पडिवादअंतस्सवि मित्तावसुणो णाहं पडिच्छिदे त्ति जादणिव्वेदाए इमाए एव्वं ववसिदं। (७२) (ट)

नायकः। [सहर्षमात्मगतम्] कथम्!! इयमेवासौ विश्वावसोर्दुहिता मलयवती!! अथवा रत्नाकरादृते कुतश्चन्द्रलेखायाः प्रसूतिः? हा! कथं वञ्चितोऽस्मि अनया!! (ध)

---

(७०) नन्वेष एव ते प्रियवयस्यः।

(७१) भवति! कथमिव?

(७२) या सा प्रियवयस्येन ते काऽपि हृदयवल्लभा शिलातले आलिखिता, तस्याः पक्षपातिना एतेन प्रतिपादयतोऽपि मित्रावसोर्नाहं प्रतीष्टेति जातनिर्वेदया अनया एवं व्यवसितम्।

(ट) प्रियवयस्येन जीमूतवाहनेनेत्यर्थः। तस्याः हृदयवल्लभायाः, पक्षपातिना अनुरक्तेन। एतेन जीमूतवाहनेन। (कर्त्रा) प्रतिपादयतोऽपि ददतोऽपि, मलयवतीमिति शेषः, मित्रावसोः मलयवतीं प्रतिपादयन्तमपि मित्रावसुम् अनादृत्य इत्यर्थः। [अनादरे षष्ठी] अहं मलयवतीत्यर्थः, न प्रतीष्टा नाङ्गीकृता, न प्रतिगृहीतेत्यर्थः; इति इति हेतोः, एवं मनसिकृत्येत्यर्थः। जातः निर्वेदो वैराग्यं यस्याः तया। व्यवसितं कृतम्।

(ध) प्रसूतिः उत्पत्तिः, कुतः? न कुत्रापि सम्भवतीत्यर्थः; यथा चन्द्रकलारूपम् उत्कृष्टं वस्तु केवलं रत्नाकरादेव जायते, तथा अस्या अपि परमरूपलावण्यवत्याः मलयवत्याः उत्पत्तिः विश्वावसोर्वंशे एव समुचिता इति भावः। [अत्र रत्नाकरात् चन्द्रलेखेव विश्वावसोरियमुत्पन्नेति बिम्बप्रतिबिम्बभावप्रत्यायनात् निदर्शनाऽलङ्कारः; तेन च विश्वावसोर्मलयवत्याश्च अतीव उत्कर्षो व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः।] वञ्चितः प्रतारितः, निराशो जात इत्यर्थः।

विदूषकः। भोदि ! जइ एव्व, ता अणवरद्धो दाणीं पिअवअस्सो। अहवा जइ मम ण पत्तिआअदि, तदा सअं ज्जेव्व सिलाअलं गदुअ पेक्खदु भोदी। (७३)

नायिका। [ सहर्षं कुसुमान्तरा नायकं पश्यन्ती हस्तमाकर्षति ]।

नायकः। [ सस्मितम् ] न तावन्मुञ्चामि यावन्मम हृदयवल्लभां शिलायामालेख्यगतां (न) न पश्यसि।

[ सर्वे परिक्रामन्ति ]।

विदूषकः। [ कदलीपत्रमपनीय ] भोदि ! पेक्ख पेक्ख एदं से हिअअवल्लहं जणं। (७४)

नायिका। [ निरूप्य अपवार्य सस्मितम् ] चदुरिए ! अहं विअ आलिहिदा। (७५)

चेटी। [ चित्राकृतिं नायिकायाः निर्वर्ण्य ] भट्टिदारिए ! किं भणासि ? अहं विअ आलिहिदे त्ति ? ईरिसं सोसारिच्छं, जेण ण जाणीअदि, किं दाव इध ज्जेव्व सिलाअले भट्टिदारिआए पडिबिंबं संकंतं, उद तुमं आलिहिदे त्ति। (७६) (प)

---

(७३) भवति ! यद्येवं, तदनपराद्ध इदानीं प्रियवयस्यः। अथवा यदि मम न प्रत्येति, तदा स्वयमेव शिलातलं गत्वा प्रेक्षतां भवती।

(७४) भवति ! प्रेक्षस्व प्रेक्षस्व एतमस्य हृदयवल्लभं जनम्।

(७५) चतुरिके ! अहमिवालिखिता।

(७६) भर्तृदारिके ! किं भणसि ? अहमिवालिखिता ? इति। ईदृशं सौसादृश्य, येन न ज्ञायते, किं तावदिहैव शिलातले भर्तृदारिकायाः प्रतिबिम्बं सङ्क्रान्तम्, उत त्वमालिखितेति।

---

(न) आलेख्यगतां चित्रिताम्।

(प) ईदृशम् एवम्भूतं, सौसादृश्यं सर्वथा तुल्यरूपत्वम्। येन सौसादृश्येन। प्रतिबिम्बं प्रतिच्छायाम्। सङ्क्रान्तं प्रतिफलितम्; किमिदं चित्रम् उत प्रतिबिम्बम् इत्यत्र महान् मे सन्देह इति भावः।

नायिका। [विहस्य] हञ्जे! दुज्जणीकिदम्हि इमिणा मं चित्तगदं दंसअन्तेण। (७७) (फ)

विदूषकः। णिव्वुत्तो दाणीं दे गंधव्वो विवाहो। (ब) ता मुंच दाव से अग्गहत्थं। एसा क्खु कावि तुरिदतुरिदा इध ज्जेव आअच्छदि। (७८)

नायकः। [मुञ्चति]।

द्वितीया चेटी। [प्रविश्य सहर्षम्] भट्टिदारिए! दिट्टिआ वड्ढसि। पडिच्छिदा क्खु तुमं भट्टिणो जीमूदवाहणस्स गुरूहिं। (७९)

विदूषकः। [नृत्यन्] ही ही भो! संपुण्णा मणोरहा पिअवअस्सस्स। अहवा ण हि ण हि, भोदीए मलअवदीए। अहवा ण एदाणं, [भोजनमभिनयन्] मम ज्जेव एक्कस्स बम्हणस्स। (८०)

चेटी। [नायिकामुद्दिश्य] आणत्तम्हि जुअराअमित्तावसुणा, जधा—"अज्ज ज्जेव मलअवदीए विवाहो, ता लहुं तं गेण्हिअ आअच्छ" त्ति। ता एहि, गच्छम्ह। (८१)

---

(७७) हञ्जे! दुर्जनीकृताऽस्मि अनेन मां चित्रगतां दर्शयता।

(७८) निर्वृत्त इदानीं ते गान्धर्वो विवाहः। तन्मुञ्च तावदस्या अग्रहस्तम्। एषा खलु काऽपि त्वरितत्वरिता इहैवागच्छति।

(७९) भर्तृदारिके! दिष्ट्या वर्धसे। प्रतीष्टा खलु त्वं भर्तुर्जीमूतवाहनस्य गुरुभिः।

(८०) ही ही भोः! सम्पूर्णा मनोरथाः प्रियवयस्यस्य। अथवा न हि न हि, भवत्या मलयवत्याः। अथवा न एतयोः, ममैव एकस्य ब्राह्मणस्य।

(८१) आज्ञप्ताऽस्मि युवराजमित्रावसुना, यथा—"अद्यैव मलयवत्याः विवाहः, तल्लघु तां गृहीत्वा आगच्छ" इति। तदेहि, गच्छावः।

---

(फ) अनेन नायकेनेत्यर्थः। दुर्जनीकृताऽस्मि असाधूकृताऽस्मि, असाधुत्वं मे अनेन व्याहृतमित्यर्थः, अयं हि मय्येव अत्यनुरागितया मां चित्रगतां कृत्वा आत्मानं विनोदयति, अहन्तु अन्यथा निश्चित्य दुर्जनवत् एनमभर्त्सयम् इत्यतः इति भावः।

(ब) निर्वृत्तः सञ्जातः। गान्धर्वविवाहः परस्परानुरागजनित उद्वाहः,—

विदूषकः। गदा क्खु तुमं दासीए धीए! एदं गेण्हिअ, अण्णेण किं एत्थ जणेण पडिवालिदव्वं? (८२) (भ)

चेटी। हडास! मा तुवर तुवर। तुम्हाणं वि खवणओ (म) आगदं ज्जेव। (८३)

नायिका। [सानुरागं सलज्जञ्च नायकं पश्यन्ती सपरिवारा निष्क्रान्ता]।

वैतालिकः। (य) [नेपथ्ये पठति]।—

क्षुण्णा पिष्टातकस्य द्युतिमिह मलये मेरुतुल्यां दधानः
सद्यःसिन्दूरधूलीकृतदिवससमारम्भसन्ध्याऽऽतपश्रीः।
उद्गीतैरङ्गनानां चरणमणिरणन्नूपुराऽऽरावहृद्यै-
रुद्वाहस्नानवेलां कथयति भवतः सिद्धये सिद्धलोकः॥१२॥

(८२) गता खलु त्वं दास्याः पुत्रि! इमां गृहीत्वा, अन्येन किमिहैव अवस्थातव्यम्?

(८३) हताश! मा त्वरस्व त्वरस्व। युष्माकमपि क्षपणकमागतमेव।

"इच्छयाऽन्योऽन्यसंयोगः कन्यायाश्च वरस्य च। गान्धर्वः स तु विज्ञेयो मैथुन्यः कामसम्भवः॥" इति मनुवचनात्।

(भ) दास्याः पुत्रि! इति तिरस्कारवाक्यम्, [अत्र समासेऽपि षष्ठ्या अलुक्, आक्रोशेऽर्थे षष्ठीविभक्तेः पाक्षिकालुग्विधानात्]। गता गच्छतीत्यर्थः, इयमपि तिरस्कारोक्तिः। [वर्तमानसामीप्ये भूतवदुपचारः] इमां गृहीत्वा त्वन्तु गच्छसीति निर्गलितार्थः; यदि जीमूतवाहनः इहैव तिष्ठेत्, तदा तमन्तरेण कथमस्याः विवाहः सम्भवेत? विवाहस्य उभयनिष्ठव्यापारत्वादिति भावः।

(म) क्षपणकं स्नानादिनिर्वाहकं द्रव्यमिति यावत्, [घटादित्वात् ह्रस्वः]।

(य) वैतालिकः [विविधस्तालः मङ्गलगीत्यादिशब्दः, तेन व्यवहरति इति ठक्] स्तुत्यादिभिः राज्ञां बोधकरः पुरुषविशेषः।

क्षुण्णेति।—इह अस्मिन्, मलये पर्वते, पिष्टातकस्य [पिष्टम् अतति गच्छति इति "कर्मण्यण्" (३।२।१ पा०) इति अण्-प्रत्ययः, ततः स्वार्थे कन्] पटवासकस्य, अत्यन्तसुगन्धिकाकसुगन्धचूर्णविशेषस्य इत्यर्थः, ("पिष्टातः पटवासकः" इत्यमरः) क्षुण्णा चर्वणेन, प्रचुरतया विकीरणेन इति भावः, मेरुतुल्यां सुमेरुसदृशीं, द्युतिं दधानः

विदूषकः। [[illegible]] भो वअस्स! दिट्ठिआ आअदं ण्हवणअं। (८४)

नायकः। [सहर्षम्] यद्येवं, किमिदानीमिह स्थितेन? आगच्छ, तातं नमस्कृत्य स्नानभूमिमेव गच्छावः।

[इति निष्क्रान्ताः सर्वे]।

## इति द्वितीयोऽङ्कः।

(८४) भो वयस्य! दिष्ट्या आगतं स्नपनकम्।

---

धारयन्, यथः साम्प्रतं, सिन्दूरधूलिभिः सिन्दूरचूर्णैः, कृता दिवसस्यारम्भे प्रातःकालेऽपीति यावत्, सन्ध्याऽऽतपस्य सायंकालिकसूर्यकिरणस्य, शोभेव तथाभूतः, विहङ्गोकः, कन्यानां नारीणाम्, चरणाः रक्ताः, मणयो येषु तादृशानां, रणतां ध्वनतां, नूपुराणां मञ्जीराणाम्, आरावैः झणत्कारैः, हृद्यैः मनोहरैः, उद्गीतैः उच्चैः गान्धारग्रामेण गीतैः, ("षड्ज-मध्यमनामानौ ग्रामौ गायन्ति मानवाः। न तु गान्धारनामानं स लभ्यो देवयोनिभिः॥" इति सङ्गीतशास्त्रनियमात्) भवतः तव, जीमूतवाहनस्येति भावः, सिद्धये शुभपरिणयसम्पादनाय, उद्वाहस्नानवेलां वैवाहिकस्नानसमयं, कथयति सूचयति। [अत्र पिष्टातकवर्षणेन [illegible] तथा सिन्दूरचूर्णैः सायंकालिकसूर्यकिरणशोभासम्पादनस्य च असम्भवत्वेऽपि तत्सदृशशोभाधारकत्वार्थे पर्यवसानात् निदर्शनाऽलङ्कारः, तेन च पिष्टातकवर्षणस्य सिन्दूरचूर्णनिक्षेपस्य च अतिप्राचुर्यं व्यज्यते, इत्यलङ्कारेण वस्तुध्वनिः]। स्रग्धरा वृत्तम्॥ १२॥

—•—

# अथ तृतीयोऽङ्कः ।

[ ततः प्रविशति मत्तो विचित्रविह्वलवेशश्चषकहस्तो विटः स्कन्धारोपितसुराभाण्डश्चेटश्च ( क ) ] ।

विटः ।—

णिच्चं जो पिबइ सुरं जणस्स पिअसंगमं अ जो कुणइ ।
अध दे दो अवि देआ बलदेओ कामदेओ अ ॥ १ ॥

[ घूर्णन् ] । सफलं क्खु मे सेहरअस्स ( ख ) जीविदं-

( १ ) नित्यं यः पिबति सुरां जनस्य प्रियसङ्गमञ्च यः करोति ।
अथ तौ द्वावपि देवौ बलदेवः कामदेवश्च ॥

सफलं खलु मे शेखरकस्य जीवितम्—

( क ) मत्तः मदोन्मत्तः, मद्यपानेनेति भावः । विचित्रेति ।—विचित्रः नानावर्णरञ्जितः, कौतूहलजनक इत्यर्थः, विह्वलः व्याकुलः, विशृङ्खल इत्यर्थः, मदावेगात् इतस्ततः विक्षिप्त इति यावत्, वेशः परिच्छदो यस्य तादृशः । चषकहस्तः पान-पात्रपाणिः, ( "चषकोऽस्त्री पानपात्रम्" इत्यमरः ) । विटः "सम्भोगहीनसम्पद् विटस्तु धूर्तः कलैकदेशज्ञः । वेशोपचारकुशलो वाग्मी मधुरोऽथ बहुमतो गोष्ठ्याम् ॥" इत्युक्तलक्षणः शृङ्गारसहायः पात्रविशेषः । स्कन्धेति ।—स्कन्धे आरोपितं निहितं, सुराभाण्डं मद्याधारो येन तादृशः । चेटः नायकस्य अधमः शृङ्गारसहायविशेषः, तदुक्तं दर्पणे—"शृङ्गारेऽस्य सहाया विट-चेट-विदूषकाद्याः स्युः । भक्ता नर्मसु निपुणाः कुपितवधूमानभञ्जनाः शुद्धाः ॥" इति, "तथा शकारचेटाद्या अधमाः परिकीर्तिताः" इति च ।

नित्यमिति ।—यः नित्यं सुरां पिबति, अथ यश्च जनस्य प्रियसङ्गमं प्रियजनेन मिलनं करोति, तौ बलदेवः कामदेवश्चेति द्वौ अपि द्वौ एव, देवौ देवपदवाच्यौ इत्यर्थः, बलदेवस्य सुराप्रियत्वात् कामदेवस्य प्रियसङ्गमकारित्वाच्च इति भावः ; ताभ्याम् अन्ये तु अतितुच्छा इत्याशयः ॥ १ ॥

( ख ) शेखरकस्य तदाख्यस्य ।

वच्छत्थलम्मि दइआ णीलुप्पलवासिआ मुहे मइरा।
सीसम्मि अ सेहरओ णिच्चं विअ चेडिआ जस्स॥ २॥

[प्रस्खलन्]। अरे! को मं चालेदि? [सहर्षम्] अवस्सं णोमालिआ मं परिहसदि। (१) (ग)

चेटः। भट्टक! ण अ दाव सा अज्जवि इह आअच्छदि। (२)

विटः। [सरोषम्] पढमपहरे ज्जेव मलअवदीए विआह-मंगलं णिव्वुत्तं, ता कीस सा दाणीं पभादे वि ण आअच्छदि? [विचिन्त्य सहर्षम्] अहवा विआहमहोस्सवे सव्वो ज्जेव पिअपणइणीजणसणाहो सिद्ध-विज्जाहरलोओ कुसुमाअरुज्जाणे आपाणअसोक्खं अणुभविस्सदि त्ति (घ) तक्केमि, तहिं ज्जेव

वक्षःस्थले दयिता नीलोत्पलवासिता मुखे मदिरा।
शीर्षे च शेखरको नित्यमिव चेटिका यस्य॥

अरे! को मां चालयति? अवश्यं नवमालिका मां परिहसति।

(२) भर्तः! न च तावत् साऽद्यापि इहागच्छति।

(३) प्रथमप्रहरे एव मलयवत्या विवाहमङ्गलं निर्वृत्तं, तत् कथं सा इदानीं प्रभातेऽपि नागच्छति? अथवा विवाहमहोत्सवे सर्व एव प्रियप्रणयिनी-जनसनाथः सिद्ध-विद्याधरलोकः कुसुमाकरोद्याने आपानकसौख्यमनुभविष्यतीति

सफलत्वे हेतुमाह, वक्षःस्थले इति।—वक्षःस्थले दयिता प्रिया, मुखे नीलोत्पल-वासिता नीलोत्पलसुरभिः, मदिरा, यस्य नित्यं चेटिकेव सङ्गिनी दासीव, तिष्ठतीति शेषः, स शेखरकः शीर्षे च शिरसि च, सर्वेषामिति शेषः, तिष्ठतीति भावः। सर्व-लोकेभ्यः शेखरकोऽहं श्रेष्ठः सुखी चेति निर्गलितार्थः॥ २॥

(ग) प्रस्खलन् पदस्खलनमभिनयन्। चालयति कम्पयति। परिहसति परिहासं करोति।

(घ) निर्वृत्तं सम्पन्नम्। प्रियेति।—प्रियेण प्रणयिनीजनेन, सनाथः सहितः। आपानकसौख्यं सुरापानजनितं सुखमित्यर्थः।

णोमालिआ मं अवेक्खमाणा चिट्ठदि ; ता तहिं ज्जेव्व गमिस्सं। कीरिसो णोमालिआए विणा सेहरओ ? (३) (ङ)

[ अवलम्बितस्कान्तिमुखोऽसि इति ]।

चेटः। एदु एदु भट्टके। एदं कुसुमाअरुज्जाणं, ता पविसदु भट्टके। (४)। [ उभौ प्रवेशं नाटयतः ]।

[ ततः प्रविशति स्कन्धन्यस्तवस्त्रयुगलो विदूषकः ]।

विदूषकः। संपुस्सा मणोरहा पिअवअस्सस्स। सुदं क्खु मए वि पिअवअस्सो कुसुमाअरुज्जाणं गमिस्सदि त्ति, ता जाव तहिं ज्जेव्व गमिस्सं। [ परिक्रम्यावलोक्य च ] इदं कुसुमाअरुज्जाणं, जाव पविशामि इदं। [ प्रविश्य भ्रमरबाधां नाटयन् ] अरे ! कोस उण दुट्ठमहुअरा मं ज्जेव्व अभिभवंति ! [ आत्मानमाघ्राय ] भोदु जाणिदं, जं तं मअणवदोबंधुअणेण जामाउअस्स वअस्सो त्ति कदुअ सबहुमाणं वसकेहिं (च) विचित्तिदोम्हि।

---

तर्कयामि, तत्रैव नवमालिका नाम अपेक्षमाणा तिष्ठति ; तत्रैव गमिष्यामि। कीदृशो नवमालिकया विना शेखरकः ?

(४) एतु एतु भर्त्ता। एतत् कुसुमाकरोद्यानं, तत् प्रविशतु भर्त्ता।

(५) सम्पूर्णा मनोरथाः प्रियवयस्यस्य। श्रुतं खलु मयाऽपि प्रियवयस्यः कुसुमाकरोद्यानं गमिष्यतीति, तत् यावत् तत्रैव गमिष्यामि। इदं कुसुमाकरोद्यानं, यावत् प्रविशामीदम्। अरे ! कथं पुनर्दुष्टमधुकरा मामेव अभिभवन्ति ! भवतु ज्ञातं, यत् तन्मदनवतीबन्धुजनेन जामातुर्वयस्य इति कृत्वा सबहुमानं

(ङ) नवमालिका इति कस्याश्चित् चेट्या नाम, शेखरकस्तु विटस्य। तया विना शेखरकस्य का शोभा ? इति काकुः। पक्षान्तरे—नवमालिका पुष्पविशेषः, शेखरः चूडा, मुकुटविशेषो वा।

(च) अपीति निश्चये। अभिभवन्ति तिरस्कुर्वन्ति। वयस्यः समानवयस्कः, सखा इति यावत्। वर्णकैः कुङ्कुमादिरञ्जनद्रव्यैः।

संताणकुसुमसेहरअं अ मम सीसे पिणद्धं। सो क्खु एसो अज्झाअरो अणत्थीभूदो। किं दाणिं एत्थ करइस्सं? अहवा एदेण ज्जेव्व मलअवदीसआसादो लद्धेण रत्तंसुअजुअलेण इत्थिअवेसं विहिअ उत्तरीअकिदावगुंठणो गमिस्सं, (छ) पेक्खामि दाव किं दासीए पुत्ता महुअरा करइस्संति। (५) [तथा करोति]।

विटः। [निरूप्य सहर्षम्] अरे चेडा! [अङ्गुल्या निर्दिश्य सहासम्] एसा क्खु णोमालिआ आअदा। मं पेक्खिअ चिरस्स आअदो त्ति कुविदा अवगुंठणं कदुअ अस्सदो गच्छदि; ता कंठे गेण्हिअ पसादेमि णं। (६) [सहसोपसृत्य कण्ठे गृहीत्वा मुखे ताम्बूलं दातुमिच्छति]।

वयं कोऽपि विनीतोऽस्मि। सन्तानकुसुमशेखरकश्च मम शीर्षे पिनद्धम्। स खलु एषः अध्याचरः अनर्थीभूतः। किमिदानीमत्र करिष्यामि? अथवा एतेनैव मलयवतीसकाशाल्लब्धेन रक्तांशुकयुगलेन स्त्रीवेशं विधाय उत्तरीयकृतावगुण्ठनो गमिष्यामि, प्रेक्षे तावत् किं दास्याः पुत्रा मधुकराः करिष्यन्ति।

(६) अरे चेट! एषा खलु नवमालिका आगता। मां प्रेक्ष्य चिरस्यागत इति कुपिता अवगुण्ठनं कृत्वाऽन्यतो गच्छति, तत् कण्ठे गृहीत्वा प्रसादयाम्येनाम्।

(छ) सन्तानस्य देवतरुविशेषस्य, ("पञ्चैते देवतरवो मन्दारः पारिजातकः। सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम्॥" इत्यमरः) कुसुमेन यत् शेखरकं शिरोमाल्यम्। शीर्षे मस्तके। पिनद्धम् आबद्धम्, [अपिपूर्वात् नह्-धातोर्निष्ठा-प्रत्ययः। अपेरकारस्य लुक् च]। अनर्थीभूतः अनिष्टरूपेण परिणतः। रक्तेति।—रक्ते लोहिते, ये अंशुके सूक्ष्मवसने, तयोः युगलं तेन। उत्तरीयेति।—उत्तरीयेण प्रावरणवस्त्रेण, कृतम् अवगुण्ठनं मुखाच्छादनमावरणं येन तादृशः।

विदूषकः। [मदनगन्धं सूचयन् नासिकां गृहीत्वा पराङ्मुखः स्थित्वा] कहं एक्काणं महुअराणं सआसादो परिब्भट्ठो दाणिं अण्णस्स दुट्ठमहुअरस्स (ज) मुहे पडिदोम्हि। (७)

विट:। कहं कोवेण परम्मुहीभुदा ? [प्रणामं कुर्वन् विदूषकस्य चरणमात्मनः शिरसि कृत्वा] पसीद णोमालिए! पसीद। (८)

[ततः प्रविशति चेटी]।

चेटी। आणत्तम्हि भट्टिदारिआए—"हंजे णोमालिए! कुसुमाअरुज्जाणं गदुअ उज्जाणपालिअं पल्लविअं भणाहि—'अज्ज सविसेसं तमालवीहिअं सज्जीकरेहि। मलअवदीसहिदेण जामादुकेण तत्थ गंतव्वं' त्ति"। आणत्ता मए पल्लविआ, ता जाव रअणीविरहवड्डिदुक्कंठं पियवअस्सअं सेहरअं अण्णेसामि। [दृष्ट्वा] एसो सेहरओ। [सरोषम्] कहं!! अण्णं कंवि इत्थिअं पसादेदि!! ता इह ट्ठिदा ज्जेव्व जाणामि का एसेत्ति (९)(झ)।

(७) कथमेकेषां मधुकराणां सकाशात् परिभ्रष्ट इदानीमन्यस्य दुष्टमधुकरस्य मुखे पतितोऽस्मि।

(८) कथं कोपेन पराङ्मुखीभूता ? प्रसीद नवमालिके ! प्रसीद।

(९) आज्ञप्ताऽस्मि भर्तृदारिकया—"हञ्जे नवमालिके! कुसुमाकरोद्यानं गत्वा उद्यानपालिकां पल्लविकां भण—'अद्य सविशेषं तमालवीथिकां सज्जीकुरु। मलयवतीसहितेन जामात्रा तत्र गन्तव्यम्' इति"। आज्ञप्ता मया पल्लविका, तत् यावत् रजनीविरहवर्धितोत्कण्ठं प्रियवयस्यं शेखरकमन्विष्यामि। एष शेखरकः। कथम् !! अन्यां कामपि स्त्रियं प्रसादयति !! तदिह स्थितैव जानामि केयमिति।

(ज) एकेषां मुख्यानां, मधुकराणां सत्यमधुकराणामित्यर्थः, एकेषाम् अन्येषाम्, एकविधानामित्यर्थो वा, ("एके मुख्यान्यकेवलाः" इत्यमरः)। अन्यस्य अन्यविधस्य, मधुकरस्य मधु मद्यं करे यस्य तस्य, सततसुरासेविनः मद्यपमत्तस्य इति यावत्।

(झ) उद्यानपालिकाम् उपवनरक्षिकाम्। विशेषेण सह इति सविशेषं यथा तथा

विटः। [सहर्षम्]

हरि-हर-पिदामहाणं वि गव्विदो जो ण जाणइ णमिदुं।
सो सेहरओ चलणेसु तुज्झ णोमालिए! पडइ ॥ ९ ॥ (१०)

विदूषकः। दासीए पुत्ता! मज्जवालआ! कुदो एत्थ णोमालिआ? (११)

चेटी। [निरूप्य सस्मितम्] कधं!! मं त्ति करिअ मदपरवसेण सेहरएण अज्ज अत्तेओ पसादीअदि!! ता जाव अलीअं कोवं करिअ दुवेवि एदे परिहसिस्सं। (१२) (अ)

(१०) हरि-हर पितामहानामपि गर्वितो यो न जानाति नन्तुम्।
स शेखरकश्चरणेषु तव नवमालिके! पतति॥

(११) दास्याः पुत्र! मद्यवालक! कुतोऽत्र नवमालिका?

(१२) कथम्!! मामिति कृत्वा मदपरवशेन शेखरकेणार्य आत्रेयः प्रसाद्यते!! तत् यावत् अलीकं कोपं कृत्वा द्वावप्येतौ परिहसिष्यामि।

सविशेषं सातिशयमित्यर्थः, तमालवीथिका तमालतरुवेष्टितगृहभित्तिरेव तमालतरु-श्रेणीमध्यवर्ति वर्त्मविशेषं वा, ("वीथी पङ्क्तौ गृहाङ्गे च रूपकान्तरवर्त्मनोः" इति मेदिनी)। जामाता जीमूतवाहनेन। रजनीति।—रजन्यां रात्रौ, विरहेण प्रियच्छेदेन, वर्द्धिता उत्कण्ठा यस्य तम्।

"साम भेदोऽथ दानञ्च नत्युपेक्षे रसान्तरम्। तद्भङ्गाय पतिः कुर्यात् षडुपायानिति क्रमात्॥" इति दर्पणोक्तेः "पादयोः पतनं नतिः" इति तत्रैवोक्तत्वात् नतिरूपं चतुर्थं मानभङ्गोपायम् अवलम्ब्य नवमालिकाभ्रमेण स्त्रीवेशधारिणं विदूषकं विटः प्रसादयति, हरीति।—गर्वितः अहङ्कारवान्, यः शेखरकः, हरिः नारायणः, हरः शिवः, पितामहो ब्रह्मा तेषां, [सम्बन्धविवक्षायां कर्मणि षष्ठी] अपि निश्चयेन, नन्तुं नमस्कर्तुं, न जानाति, अयि नवमालिके! सः तव चरणेषु [अवच्छेदे सप्तमी, गौरवे बहुत्वञ्च] पतति। अयि दर्पहारिणि! हरि-हर-पितामहेभ्योऽपि त्वां श्रेष्ठां गणयामि, अतस्त्वं प्रसीद इति भावः। ९।

(अ) मदपरवशेन मत्तेन। अलीकं मिथ्या।

चेटः। [चेटीं दृष्ट्वा शेखरकं हस्तेन वारयन्] भट्टका! मुंच एदं। ण भोदि एसा णोमालिआ। एसा उण दोसारत्तेहिं लोअणेहिं पेक्खंती आअदा। (१३) (ट)

चेटी। [उपसृत्य] सेहरअ! का उण एसा पसादीअदि? (१४)

विदूषकः। [अवगुण्ठनमवताय्य] भोदि! कोवि बम्हणो अहं मंदभाअधेअपउत्तो। (१५)

विटः। [विदूषकं निरूप्य] अरे कविलमंकडा! (ठ) तुमंवि सेहरअं पदारेसि? अरे चेड़ा! गेण्ह एदं, जाव णोमालिअं पसादेमि। (१६)

चेटः। जं भट्टके आणवेदि। (१७)

विटः। [विदूषकं मुक्त्वा चेट्याः पादयोः पतति] पसीद णोमालिए! पसीद। (१८)

विदूषकः। [आत्मगतम] एसो मे अवक्कमिदुं अवसरो (१९)। [पलायितुमीहते] (ड)

---

(१३) भर्तः! मुञ्चैतम। न भवत्येषा नवमालिका। एषा पुनः दोषारक्ताभ्यां लोचनाभ्यां प्रेक्षमाणा आगता।

(१४) शेखरक! का पुनरेषा प्रसाद्यते?

(१५) भवति! कोऽपि ब्राह्मणोऽहं मन्दभागधेयप्रयुक्तः।

(१६) अरे कपिलमर्कट! त्वमपि शेखरकं प्रतारयसि? अरे चेट! गृहाणैतम्, यावत् नवमालिकां प्रसादयामि।

(१७) यत भर्ता आज्ञापयति।

(१८) प्रसीद नवमालिके! प्रसीद।

(१९) एष मेऽपक्रमितुमवसरः।

(ट) दोषारक्ताभ्यां क्रोधेन सम्यक् लोहिताभ्याम्।

(ठ) कपिलमर्कट! वर्णतविशेषरञ्जितगात्रत्वात् विकृतवर्णवानरतुल्य!

(ड) अपक्रमितुं पलायितुम्। ईहते चेष्टते।

चेटः। [विदूषकं यज्ञोपवीते गृह्णाति। यज्ञोपवीतं त्रुट्यति (ढ)] कहिं कहिं कविलमक्कडा! पलाअसि? (२०) तदुत्तरीयेणैव गलके बद्ध्वा कर्षति]।

विदूषकः। भोदि णोमालिए! पसीद, मुंचावेहि मं। (२१)

चेटी। [विहस्य] जइ भूमीए सीसं णिवेसिअ पादेसु मे पडसि। (२२) (ण)

विदूषकः। [सरोषं सकम्पञ्च] भो! गंधव्वराअमित्तो बम्हणो भविअ दासीए धीआए पादेसु पडिस्सं? (२३)

चेटी। [अङ्गुल्या तर्जयन्ती सस्मितम्] दाणिं पाडइस्सं। सेहरअ! उट्ठेहि, पसण्णा दे अहं। [कण्ठे गृह्णाति] एसो उण जामादुअस्स पिअवअस्सो तुए खलीकिदो। एव्वं अ सुणिअ कदावि भट्टा मित्तावसू तव कुप्पइ, ता आदरेण सम्माणेहि णं। (२४) (त)

(२०) क्व क्व कपिलमर्कट! पलायसे?

(२१) भवति नवमालिके! प्रसीद, मोचय माम्।

(२२) यदि भूमौ शीर्षं निवेश्य पादयोर्मे पतसि।

(२३) भोः! गन्धर्वराजमित्रं ब्राह्मणो भूत्वा दास्याः पुत्र्याः पादयोः पतिष्यामि?

(२४) इदानीं पातयिष्यामि। शेखरक! उत्तिष्ठ, प्रसन्ना तेऽहम्। एष पुनर्जामातुः प्रियवयस्यस्त्वया खलीकृतः। एतच्च श्रुत्वा कदापि भर्ता मित्रावसुस्तुभ्यं कुप्यति, तदादरेण सम्मानयैनम्।

---

(ढ) यज्ञोपवीते यज्ञोपवीतैकदेशे, [औपश्लेषिके सप्तमी]। त्रुट्यति छिनत्ति।

(ण) शीर्षं मस्तकम्। निवेश्य स्थापयित्वा।

(त) तर्जयन्ती भर्त्सयन्ती। अखलः खलः कृतः खलीकृतः दुर्जनीकृतः, अपकृत इत्यर्थः, दुर्जनकार्यञ्च परानिष्टकरणम्, अयमपि त्वद्व्यापारं मित्रावसवे निवेद्य तवानिष्टचेष्टां करिष्यतीति भावः।

विटः । जं णोमालिआ आणवेदि [विदूषकं कण्ठे गृहीत्वा]। अज्ज ! तुमं मए संबंधिओ त्ति करिअ परिहसिदो। [सवर्णम्] किं सच्चकं ज्जेव सेहरओ ! तुए किदो परिहासो ? [उत्तरीयं वर्तुलीकृत्य आसनं ददाति] इध उवविसदु संबंधिओ। (२५) (थ)

विदूषकः। [स्वगतम्] दिट्ठिआ अवगदो विअ से मदावेओ (२६) (द) [उपविशति]।

विटः। णोमालिए ! उवविस तुमंवि एदस्स पास्से, जेण दुवेवि तुम्हे समं (ध) ज्जेव मण्णाणइस्सं। (२७)

चेटी। [विदूषकोपविशति]।

विटः। [चषकमादाय] अरे चेड़ा ! सुभरिदं क्खु एदं चसअं करेहि सुराए। (२८)

चेटः। [नाट्येन चषकभरणं करोति]।

विटः। [स्वशिरःशेखरात पुष्पाणि गृहीत्वा चषके विन्यस्य जानुभ्यां स्थित्वा नवमालिकायाः उपनयति]। णोमालिए ! चाक्खअ देहि एदं एदस्स। (२९) (न)

---

(२५) यन्नवमालिका आज्ञापयति। आर्य ! त्वं मया सम्बन्धीति कृत्वा परिहसितः। किं सत्यमेव शेखरक ! त्वया कृतः परिहासः ? इह उपविशतु सम्बन्धी।

(२६) दिष्ट्या अपगत इवास्य मदावेगः।

(२७) नवमालिके ! उपविश त्वमपि एतस्य पार्श्वे, येन द्वावपि युवां समकमेव सम्मानयिष्यामि।

(२८) अरे चेट ! सुभृतं (सुपूरितं) खल्वेतं चषकं कुरु सुरया।

(२९) नवमालिके ! आस्वाद्य देह्येतमेतस्य।

---

(थ) सम्बन्धी जामातृसम्बन्धेन परिहसनीयत्वात् तत्सम्बन्धवान् इत्यर्थः।

(द) मदावेगः मत्ततायाः उच्छ्वासः।

(ध) समकमेव एककालमेव।

(न) स्वशिरःशेखरात् निजशिरोभूषणमाल्यात्। उपनयति अर्पयति। एतं चषकम्। एतस्य विदूषकस्य।

चेटी। [सस्मितम्] जं सेहरओ भणादि। (३०) [तथा कृत्वा विटमर्पयति]।

विटः। [विदूषकस्य चषकमर्पयति] एदं णोमालिआमुहसंसग्गसविसेसवासिअरसं सेहरआअस्सेण केणावि अणासादिदपुव्वं, ता पिबेहि एदं। किं दे अदोवि अवरं सम्माणं करइस्सं? (३१) (प)

विदूषकः। [सवैलक्ष्यस्मितं कृत्वा] सेहरअ! बम्हणो क्खु अहं। (३२)

विटः। जइ तुमं बम्हणो, ता कहिं दे णवसुत्तं? (३३) (फ)।

विदूषकः। तं क्खु मे इमिणा चेडेण कड्ढीअमाणं छिण्णं। (३४)

(३०) यत् शेखरको भणति।

(३१) एतत् नवमालिकामुखसंसर्गसविशेषवासितरसं शेखरकादन्येन केनाप्यनास्वादितपूर्वं, तत् पिबैतत्। किं ते अतोऽप्यपरं सम्मानं करिष्यामि?

(३२) शेखरक! ब्राह्मणः खल्वहम्।

(३३) यदि त्वं ब्राह्मणः, तत् क्व ते नवसूत्रम्?

(३४) तत् खलु मेऽनेन चेटेन कृष्यमाणं छिन्नम्।

(प) एतत् चषकस्थपानीयम्। नवमालिकायाः मुखसंसर्गेण वदनसम्पर्केण, सविशेषं सातिशयं यथा तथा, वासितः सुरभीकृतः, रसः स्वादः यस्य तत्। अनास्वादितपूर्वं पूर्वं न आस्वादितम्।

(फ) नवसूत्रं नवगुणितं यज्ञसूत्रमित्यर्थः। तच्च एवं कर्त्तव्यं, यदुक्तं कालिकापुराणे ४र्थाध्याये—"ऊर्द्ध्वन्तु त्रिवृतं सूत्रं सधवानिर्मितं शनैः। तन्तुत्रयमधोवृत्तं यज्ञसूत्रं विदुर्बुधाः॥ त्रिगुणं तद्ग्रन्थियुक्तं वेदप्रवरसम्मितम्। शिरोधरान्नाभिमध्यात् पृष्ठार्द्धपरिमाणकम्॥" इति। एतच्च नवतन्तुत्वं व्यक्तमाह देवलः, यथा—"यज्ञोपवीतं कुर्वीत सूत्राणि नवतन्तुभिः। एकेन ग्रन्थिना तन्तुर्द्विगुणस्त्रिगुणोऽथवा॥" इति। पैठिनसिमते त्रुटितन्तु अपि यज्ञसूत्रं भवितुमर्हति।

चेटी। [विहस्य] जइ एव्वं, ता वेदक्खराइंवि दाव कातिवि उदाहर। (३५)

विदूषकः। भोदि! इमिणा सोहुगंधेण कहिं वेदक्खराइं? अहवा किं मम भोदीए समं विवादेण? एसो दे बम्हणो पादेसु पड़दि। (३६) (व) [इति पादयोः पतितुमिच्छति]।

चेटी। [हस्ताभ्यां निवार्य्य] मा क्खु एव्वं करेदु अज्जो। सेहरअ! ओसर ओसर, बम्हणो क्खु एसो। [विदूषकस्य पादयोः पतति]। अज्ज! ण तुए कुविदव्वं, संबंधिआनुरूवो क्खु एसो मए परिहासो किदो। (३७)

विटः। अहंवि णं पसादेमि। [पादयोर्निपत्य] मरिसेदु मरिसेदु अज्जो, जं मए मदपरवसेण अवरद्धं, जेण अहं णोमालिआए सह आवाणअं गमिस्सं। (३८) (भ)

विदूषकः। मरिसिदं मए, गच्छ तुम्हे. अहं वि पिअवअस्सं पेक्खामि। (३९)

[निष्क्रान्तौ विटचेट्यौ सह चेटस्य]

---

(३५) यद्येवं, तत वेदाक्षराण्यपि तावत् कान्यपि उदाहर।

(३६) भवति! अनेन सीधुगन्धेन क्व वेदाक्षराणि? अथवा किं मम भवत्याः समं विवादेन? एष ते ब्राह्मणः पादयोः पतति।

(३७) मा खल्वेवं करोत्वार्य्यः। शेखरक! अपसर अपसर, ब्राह्मणः खल्वेषः। आर्य्य! न त्वया कोपितव्यं, सम्बन्ध्यनुरूपः खल्वेष मया परिहासः कृतः।

(३८) अहमप्येनं प्रसादयामि। मर्षयतु मर्षयत्वार्य्यः, यत् मया मदपरवशेनापराद्धम्; येनाहं नवमालिकया सह आपानकं गमिष्यामि।

(३९) मर्षितं मया, गच्छतं युवाम्, अहमपि प्रियवयस्यं प्रेक्षे।

---

(व) सीधुगन्धेन मद्यगन्धेन। अयमभिप्रायः,—यत्र मद्यपानादिरूपीड़नाचारो वर्त्तते, तत्र वेदाक्षराणि कथमपि नोच्चार्य्याणि।

(भ) मर्षयतु क्षमताम्। आपानकं मद्यपानस्थानम्।

विदूषकः। अदिक्कंतो वअस्सस्स अआलमिच्चू, ता जाव अहंवि मज्जवाससंगदूसिदो इध दीहिआए ण्हाइस्सं। (म) [तथा करोति। नेपथ्याभिमुखमवलोक्य] एसो पिअवअस्सो वि रुप्पिणीं विअ हरी मलअवदीं अवलंबिअ इदो ज्जेव आअच्छदि, ता जाव पास्सपरिवत्ती होमि। (४०)

[ततः प्रविशति गृहीतवरनेपथ्यो नायकः, मलयवती, विभवतश्च परिवारः]।

नायकः। [मलयवतीमवलोकयन् सहर्षम्]।—

दृष्टा दृष्टिमधो ददाति कुरुते नालापमाभाषिता
शय्यायां परिवृत्य तिष्ठति बलादालिङ्गिता वेपते।
निर्यान्तीषु सखीषु वासभवनान्निर्गन्तुमेवेहते
याता वामतयैव मेऽद्य सुतरां प्रीत्यै नवोढा प्रिया ॥४॥

---

(४०) अतिक्रान्तो वयस्यस्याकालमृत्युः। तत् यावदहमपि मद्यवाससङ्ग-दूषित इह दीर्घिकायां स्नास्यामि। एष प्रियवयस्योऽपि रुक्मिणीमिव हरिर्मलय-वतीमवलम्ब्य इत एवागच्छति, तत् यावत् पार्श्वपरिवर्त्ती भवामि।

---

(म) अतिक्रान्तः अतीतः, न सङ्घटित इत्यर्थः, [कर्त्तरि निष्ठाप्रत्ययः]। अकालमृत्युः मद्यपान-प्रहारादिजनिताकालमृत्युभयमित्यर्थः, दुर्जनसंसर्गो वा मृत्युतुल्य-त्वादित्यर्थो वा। मत्तेति।—मत्तस्य मदोन्मत्तस्य, अत एव बालस्य बालकवत् कार्य्याकार्य्यविवेकरहितस्य, सङ्गेन संसर्गेण, दूषितः कलुषितः।

नवोढायाः स्वरूपं वर्णयति, दृष्टेति।—अद्य नवोढा नवपरिणीता, प्रिया वामतया प्रतिकूलतयैव, मे मम, सुतराम् अत्यर्थं, प्रीत्यै जाता अतिप्रीतिकरी भूतेत्यर्थः; तथा हि, दृष्टा अवलोकिता सती, अधो दृष्टिं ददाति, आभाषिता आलापिता सती, न आलापं कुरुते, शय्यायां परिवृत्य पराङ्मुखीभूय, तिष्ठति, बलात् बलेनालिङ्गितेत्यर्थः, आलिङ्गिता सती वेपते कम्पते, सखीषु वासभवनात् निर्यान्तीषु निर्गच्छन्तीषु सतीषु, निर्गन्तुमेव ईहते चेष्टते, इत्थं प्रतिकूलाचरणमपि मम प्रीतिं वितनोतीति निष्कर्षः। [अत्र अनेकासु क्रियासु "प्रिया" इति पदस्य कारकत्वेन सम्बन्धात् दीपकालङ्कारः, स च स्वभावोक्त्याऽनुप्राणितः]। शार्दूलविक्रीडितं वृत्तम् ॥ ४ ॥

[ मलयवतीं प्रपश्यन् ]। प्रिये मलयवति !—

हुङ्कारं ददता मया प्रतिवचो यन्मौनमासेवितं
यद्दावानलदीप्तिभिस्तनुरियं चन्द्रातपैः स्नापिता।
ध्यातं यत् सुबहून्यनन्यमनसा नक्तन्दिनानि प्रिये!
तस्यैतत् तपसः फलं मुखमिदं पश्यामि यत्तेऽधुना ॥ ५ ॥

नायिका। [ अपवार्य्य ] हञ्जे चदुरिए! ण केवलं दंसणीओ, पिअंवि भणिदुं जाणादि ज्जेव्व। ( ४१ ) ( च )

( ४१ ) हञ्जे चतुरिके! न केवलं दर्शनीयः, प्रियमपि भणितुं जानात्येव।

---

हुङ्कारमिति।—हे प्रिये! मया प्रतिवचः केनापि कृतस्य प्रश्नस्य प्रत्युत्तरं, हुङ्कारं हुं हुमित्येवं रूपं शब्दं, ददता कुर्वता सता इत्यर्थः, यत् मौनं तूष्णीम्भावः, वाक्संयम इत्यर्थः, आसेवितम् अनुष्ठितम्, अवलम्बितमित्यर्थः, दावानलस्येव दीप्तिर्येषां तादृशैः, अत्युद्दीपकत्वादिति भावः, चन्द्रातपैः चन्द्रकिरणैः, यत् इयं तनुः मदीयं शरीरं, स्नापिता अभिषेचिता, तथा अनन्यमनसा अन्येषु विषयेषु मनः यस्य सः न भवतीति तेन एकाग्रचित्तेन सता इत्यर्थः, सुबहूनि नक्तन्दिनानि, व्याप्येति शेषः, [ अत्यन्तसंयोगे द्वितीया ] यत् ध्यातं चिन्तितम्, अधुना ते इदं मुखं पश्यामीति यत्, एतत् तव मुखदर्शनं, तस्य पूर्वोक्तस्य मदनुष्ठितस्य, तपसः मौनावलम्बनादिरूपस्येत्यर्थः, फलं परिणामः, तथा हि, मौनावलम्बनं नियताहारं ध्यानञ्च तपसोऽङ्गं, मया च त्वत्प्राप्त्याशया त्वद्गतचित्ततया च केनापि सहालापवर्जनात् नितरामावश्यके व्यापारे हुङ्कारेणैव प्रत्युत्तरदानात् अग्नितुल्य-चन्द्रकिरणधारया स्नानात् सततं त्वच्चिन्तनाच्च तदङ्गसंक्रान्त-तपस्याग्र्यरूपं तपोऽनुष्ठितं, यतः एवमुग्रं तपो विना एतादृशं रमणीरत्नं न लभ्यते इति भावः। [ अत्र पूर्वपादद्वये एकस्य कारकस्य क्रियाबाहुल्यात् दीपकालङ्कारः,—"अथ कारकमेकं स्यादनेकासु क्रियासु चेत्" इत्युक्तलक्षणात्; तथा जीमूतवाहनस्य तथाविधतपसः केवलं कामजन्यत्वात् प्रकृततपसस्तस्य च भेदेऽपि अभेदोक्तेरतिशयोक्तिरलङ्कारः-अनयोः सङ्करः ]। शार्दूलविक्रीडितं वृत्तम् ॥ ५ ॥

( च ) दर्शनीयः रूपवानित्यर्थः।

चेटी। एदं क्खु तं कुसुमाअरुज्जाणं, ता पविसदु भट्टा। (४४)

[ सर्वे प्रविशन्ति ]।

माधवः। [ विलोक्य ] अहो नु कुसुमाकरोद्यानस्य परा श्रीः !! ( ब ) इह हि—

निष्यन्दश्चन्दनानां शिशिरयति लतामण्डपं कुट्टिमानां
तारं धारागृहाणां ध्वनिमनु तनुते ताण्डवं नीलकण्ठः ।
यन्त्रोन्मुक्तश्च वेगात् चलति विटपिनां पूरयन्नालवालान्
आपातोत्पीडहेलाहृतकुसुमरजःपिञ्जरोऽयं जलौघः ॥७॥

( ४४ ) एतत् खलु तत् कुसुमाकरोद्यानं, तत् प्रविशतु भर्त्ता ।

साङ्गाना वस्तुप्रतीतेः उपमानस्य उपमेयस्य निष्फलत्वाभिधानेन प्रतीपालङ्कारश्च, तथा चन्द्रहारधारणवैफल्यं प्रति स्वाङ्गलावण्यस्य हेतुत्वप्रदर्शनात् काव्यलिङ्गमलङ्कारोऽपि, एतेषां सङ्करः ] शार्दूलविक्रीडितं वृत्तम् ॥ ६ ॥

( ब ) परा महती । श्रीः शोभा ।

उपवनश्रियं वर्णयति, निष्यन्द इति।—चन्दनानां निष्यन्दः द्रवः, चन्दनवृक्षेभ्यः च्युतः रस इत्यर्थः, कुट्टिमानां मणिकादिभिः बद्धादिभिर्वा बद्धभूमीनां, लतामण्डपं शिशिरयति शीतलयति इत्यर्थः, शैत्यगुणवत्त्वादिति यावत्, नीलकण्ठो मयूरः, ( "मयूरो बर्हिणो बर्ही नीलकण्ठो भुजङ्गभुक्" इत्यमरः ) धारागृहाणां जलयन्त्रगृहाणां, ( "फोयारा" इति बङ्गभाषा ) तारं महान्तं ध्वनिम् अनु अनुसृत्य इत्यर्थः, मेघध्वनिमनुमायेति भावः, [ अनु योगे द्वितीया विभक्तिः ] ताण्डवं नृत्यं, ( "ताण्डवं नटनं नाट्यं लास्यं नृत्यञ्च नर्तने" इत्यमरः ) तनुते विस्तारयति, यन्त्रात् धारायन्त्रात्, जलसेचनयन्त्रादित्यर्थः, उन्मुक्तः निःसृतः, अयं जलौघः जलराशिश्च, वेगात् आपातेन निपतनेन, यः उत्पीडः आघात इत्यर्थः, तेन हेलया अनायासेन, हृतानां पातितानां, कुसुमानां रजोभिः परागैः, पिञ्जरः पीतवर्णेन रञ्जितः सन् इत्यर्थः, ( "पिञ्जरोऽश्वान्तरे पीते क्लीबं स्वर्णे कपोतने" इति मेदिनी ) विटपिनां तरूणाम्, आलवालान् मूलस्थितवर्तुलाकारजलाधारवेष्टनानि, पूरयन् चलति पतति । [ अत्र नीलकण्ठस्य धारागृहध्वनौ मेघध्वनिभ्रान्त्या ताण्डवात् भ्रान्तिमानलङ्कारः; तथा जलौघस्य स्वगत-गुणत्यागेन परागाणां पिञ्जरत्वग्रहणात् तद्गुणश्च; तदेतयोः संसृष्टिः ] स्रग्धरा वृत्तम् ॥ ७ ॥

अपि च—

> अमी गीतारम्भैर्मुखरितलतामण्डपभुवः
> परागैः पुष्पाणां प्रकटपटवासव्यतिकराः ।
> पिबन्तः पर्य्याप्तं सह सहचरीभिर्मधुरसं
> समन्तादापानोत्सवमनुभवन्तीव मधुपाः ॥ ८ ॥

विदूषकः । [ उपसृत्य ] जेदु जेदु भवं । सोत्थि भोदीए । ( ४५ )

नायकः । वयस्य ! चिराद्दृष्टोऽसि ।

विदूषकः । भो वअस्स ! लहुं ज्जेव्व आअदोम्हि । किं उण विआहमहूसवमिलिदमिलिद-विज्जाहराणं आपाणदंसणकोदूहलेण परिब्भमंतो एत्तिअं वेलं ( अ ) चिट्ठिदोम्हि ; ता तुमंवि दाव पेक्ख । ( ४६ )

( ४५ ) जयति जयति भवान् । स्वस्ति भवत्यै ।

( ४६ ) भो वयस्य ! लघु एवागतोऽस्मि । किं पुनर्विवाहमहोत्सवमिलितमिलित-विद्याधराणामापानदर्शनकौतूहलेन परिभ्रमन्नेतावतीं वेलां स्थितोऽस्मि । तत् त्वमपि तावत् प्रेक्षस्व ।

अमी इति ।—अमी मधुपाः मधुकराः, गीतारम्भैः मुखरिताः झङ्कृताः, लता-मण्डपान्येव भुवः स्थानानि यैः तथोक्ताः, ("पृथिव्यां स्थानमात्रेऽपि भूर्भूमिरिति दृश्यते" इति कोषः) पुष्पाणां परागैः रजोभिः, प्रकटः सुव्यक्तः, पटवासानां पिष्टातानां, वस्त्रसुगन्धकरकुङ्कुमादिचूर्णानामित्यर्थः, ("पिष्टातः पटवासकः" इत्यमरः) व्यतिकरः सम्पर्कः येषां तथाविधाः, पटवासरञ्जिता इवेत्यर्थः, सहचरीभिः सखीभिः, मधुकरीभि-रित्यर्थः, सह पर्य्याप्तं प्रभूतं, मधुरसं पुष्परसं, मकरन्दरसमिति यावत्, ("मधु मद्ये पुष्परसे क्षौद्रे च" इत्यमरः) पिबन्तः सन्तः समन्तात् इतस्ततः, आपानोत्सवं पान-गोष्ठीषु मधुपानानन्दम्, अनुभवन्तीव । [ अत्र वर्णनीयस्य तिर्य्यग्विषयत्वेन अनौचित्य-प्रवृत्तत्वात् रसाभासः ; तदुक्तं दर्पणे—"अनौचित्यप्रवृत्तत्वे आभासो रसभावयोः" तथा "तिर्य्यगादिगते । शृङ्गारेऽनौचित्यम्" इति । उत्प्रेक्षाऽलङ्कारः ] । शिखरिणी वृत्तं —"रसै रुद्रैश्छिन्ना य-म-न-स-भ-ला गः शिखरिणी" इति लक्षणात् ॥ ८ ॥

( अ ) किं पुनः किन्तु । विवाहार्थं यो महोत्सवः तस्मिन् मिलिता ये विद्या-विद्याधराः तेषाम् । आपानं पानगोष्ठी, मद्यपानसभा इत्यर्थः, ( "आपानं पान-

नायकः। एवं यथाऽऽह भवान्। [समन्तादवलोक्य] वयस्य! पश्य पश्य—

स्निग्धाङ्गा हरिचन्दनेन दधतः सन्तानकानां स्रजो
माणिक्याभरणप्रभाव्यतिकरैश्चित्रीकृताच्छांशुकाः।
सार्द्धं सिद्धजनैर्मधूनि दयितापीतावशिष्टान्यमी
मिश्रीभूय पिबन्ति चन्दनतरुच्छायासु विद्याधराः ॥ ९ ॥

तदिह वयमपि तां तमालवीथिं (ष) गच्छामः। [परिक्रामति]।

विदूषकः। एसा क्खु तमालवीहिआ। एदं संचरंतो दाव परिक्खेदिदो विअ भोदो दीसदि; ता इध ज्जेव्व फटिअमणिसिलाअले उवविसिअ वीसमम्ह। (४७)

(४७) एषा खलु तमालवीथिका। एतां संचरन् तावत् परिखेदित इव भवान् दृश्यते। तदिहैव स्फटिकमणिशिलातले उपविश्य विश्राम्यामः।

-मालिका" इत्यमरः) तस्य दर्शनाय यत् कौतूहलं तेन। [वेलामित्यत्र अत्यन्तसंयोगे द्वितीया]।

आपानं वर्णयति, स्निग्धाङ्गा इति।—अमी दूरवर्त्तिनः इत्यर्थः, [तदुक्तं—"इदमस्तु सन्निकृष्टं समीपतरवर्त्ति चैतदो रूपम्। अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीयात्॥" इति] विद्याधराः हरिचन्दनेन गोशीर्षनामकचन्दनविशेषेण कुङ्कुमेन वा, ("हरिचन्दनमस्त्री स्यात् देवतानां महीरुहे। नपुंसकन्तु गोशीर्षे ज्योत्स्ना कुङ्कुमयोरपि॥" इति मेदिनी) स्निग्धानि चिक्कणानि, अङ्गानि येषां तथोक्ताः, ("स्निग्धं वत्सले चिक्कणेऽपि स्यात्" इति मेदिनी) तथा सन्तानकानां देवतरुविशेषोत्पन्नपुष्पाणां, ["पुष्पमूलेषु बहुलम्" (वा०) इति तद्धितलुक्] स्रजो माल्यानि, [सृज् धातोः क्विप्, समादेशश्च] दधतः धारयन्तः, तथा माणिक्याभरणानां रत्नालङ्काराणां, प्रभाव्यतिकरैः परस्परमिलितप्रभापुञ्जैः, चित्रीकृतानि रञ्जितानि, अच्छानि विशदानि, अंशुकानि सूक्ष्मवसनानि येषां तथाविधाः सन्तः, चन्दनतरुच्छायासु [अत्र बहुवचनपूर्वकसमासेऽपि "छाया बाहुल्ये" (२।४।२२ पा०) इति क्लीबत्वाऽभावः, कवीनां निरङ्कुशत्वात् समासविधेरनित्यत्वात् वा] सिद्धजनैः सार्द्धं मिश्रीभूय मिलित्वा, दयितापीतावशिष्टानि दयिताभिः प्रियाभिः, पीतेभ्योऽवशिष्टानि, कामिनां तथाविधाचारत्वात्, मधूनि मद्यानि, मद्यानां रतिवर्द्धकत्वात्, पिबन्ति। [स्वभावोक्तिरलङ्कारः]। शार्दूलविक्रीडितं वृत्तम् ॥ ९ ॥

(ष) ("वीथिः पङ्क्तौ गृहाङ्गे च" इति मेदिनी)।

नायकः। वयस्य ! सम्यगुपलक्षितम्—

एतन्मुखं प्रियायाः शशिनं जित्वा कपोलयोः कान्त्या।
तापानुरक्तमधुना कमलं ध्रुवमीहते जेतुम्॥ १०॥

[नायिकां हस्ते गृहीत्वा] प्रिये ! इहोपविशामः।

नायिका। जं अज्जउत्तो आणवेदि। (४८)

[सर्वे उपविशन्ति]।

नायकः। [नायिकाया मुखमुन्नमय्य पश्यन्] प्रिये ! मुधैव त्वमस्माभिः कुसुमाकरोद्यानकुतूहलिभिः खेदिता। (ख) कुतः ?—

एतत्ते भ्रूलतोल्लासि पाटलाधरपल्लवम्।
मुखं नन्दनमुद्यानमतोऽन्यत् केवलं वनम्॥ ११॥

---

(४८) यदार्यपुत्र आज्ञापयति।

---

एतन्मुखमिति।—एतत् अङ्गुल्या निर्दिष्टमित्यर्थः, प्रियायाः मुखं कपोलयोः गण्डयोः, कान्त्या प्रभया विशदयेति भावः, शशिनं चन्द्रं, जित्वा निर्जित्य, अधुना तापेन सूर्यातपेन, अनुरक्तम् अनुरञ्जितं, लोहितं रक्तमित्यर्थः, ("रक्तोऽनुरक्ते नील्यादिरञ्जिते लोहिते त्रिषु" इति मेदिनी) कमलं पद्मं, जेतुम् ईहते चेष्टते, ध्रुवं मन्ये। [अत्र उपमेयस्य मुखस्य उपमानाभ्यां चन्द्रकमलाभ्यामपि आधिक्यवर्णनात् व्यतिरेकालङ्कारः, तथा "मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादयः" इति ध्रुवशब्दस्य उत्प्रेक्षाव्यञ्जकत्वात् उत्प्रेक्षा, तदेतयोः सङ्करः, किञ्च, इत्येताभ्यामेव अतिशयोक्तिर्ध्वन्यते इत्यलङ्कारध्वनिः]। आर्या वृत्तम्॥ १०॥

(ख) उन्नमय्य उत्तोल्य, [उत्पूर्वात् नमयतेर्ल्यप् अयादेशश्च] कुसुमाकरोद्याने कुसुमाकरोद्यानदर्शनविषये इत्यर्थः, कुतूहलम् एषामस्तीति तैः। खेदिता क्लेशिता।

एतदिति।—भ्रुवौ एव लते ताभ्याम् उल्लसते इति उल्लासि शोभमानं, पाटलः श्वेतरक्तः, अधर एव पल्लवः यत्र तादृशम्, एतत् ते तव, मुखं, नन्दयतीति नन्दनं तदाख्यम्; पक्षान्तरे—आह्लादजनकम्, उद्यानं देवोद्यानमित्यर्थः, अतः अस्मात् तव मुखरूपात् उद्यानात् अन्यत् उद्यानं, केवलं वनम्। [अत्र "भ्रूलता" "अधरपल्लवः" इति पदयोः

चेटी। [ साकूतं विदूषकं निर्दिश्य ] सुदं तुए, भट्टदारिआ कहं वण्णेदि ? अज्ज उण अहं तुमं वण्णेमि। ( छ ) ( ४९ )

विदूषकः। [ सहर्षम् ] भोदि ! जीविदोम्हि, ता करेदु भोदी पसादं, जेण एसो ( क ) मं पुणोवि ण भणादि, जहा तुमं ईदिसो तारिसो कविलमंकडाआरो त्ति। ( ५० )

चेटी। अज्ज ! तुमं मए विवाहजाअरणे णिद्दाअमाण-णिमीलिअअच्छो सोहणो दिट्ठो। ता तह ज्जेव्व चिट्ठ, जेण वण्णेमि। ( ५१ ) ( ख )

( ४९ ) श्रुतं त्वया, भर्तृदारिका कथं वर्णयति ? अद्य पुनरहं त्वां वर्णयामि।

( ५० ) भवति ! जीवितोऽस्मि, तत् करोतु भवती प्रसादं, येनैष मां पुनरपि न भणति, यथा त्वमीदृशः तादृशः कपिलमर्कटाकार इति।

( ५१ ) आर्य ! त्वं मया विवाहजागरणे निद्रायमाणनिमीलिताक्षः शोभनो दृष्टः; तथैव तिष्ठ, येन वर्णयामि।

---

रूपकम्। नन्दनपदं श्लिष्टम्। मुखस्य उद्यानरूपेण वर्णनात् अतिशयोक्तिः। "केवलं वनम्" इति पदेन व्यतिरेकः, तथा नन्दनवनस्य नन्दनत्वाभावोक्तेः अति-शयोक्तिश्च, प्रसिद्धोपमानस्य नन्दनस्य आनन्दजनकताहीनरूपनिष्फलत्वकथनात् "प्रसिद्धस्योपमानस्योपमेयत्वप्रकल्पनम्। निष्फलत्वाभिधानं वा प्रतीपमिति कथ्यते॥" इति लक्षणात् प्रतीपालङ्कारोऽपि. इति संसृष्टिः सुधीभिर्भाव्या ]॥ १६॥

( छ ) वर्णयामि भवतः स्तवनं करोमि ; पक्षान्तरे—वर्णवन्तं ( रञ्जितं ) करोमि इति श्लेषः। [ तत्करोति "तत् करोति तदाचष्टे" ( ग० ) इति णिचि मतुपो लुक् ]।

( क ) एषः विट इति भावः।

( ख ) विवाहजागरणे विवाहरात्रौ जागरणकाले इत्यर्थः। निद्रेति।— निद्रायमाणस्येव निद्रितस्येव, निमीलिते अक्षिणी लोचने यस्य सः। [ अनिद्रा-वान् निद्रावान् भवन् इति निद्रायमाणः, अभूततद्भावार्थे क्यङ्प्रत्ययः। "यद्यपि निद्रादयः शब्दाः धर्मवाचिनः, तथाऽपि अत्र शब्दशक्तिस्वभावात् उपचारात् तद्वति द्रव्ये वर्त्तन्ते, निद्रायते अनिद्रावान् निद्रावान् भवतीत्यर्थः" इति कौमुदीचन्द्रः ]। वर्णयामि रञ्जितं करोमीति श्लिष्टार्थः।

विदूषकः। [तथा करोति]।

चेटी। [स्वगतम्] जाव एसो णिमीलिअअच्छो चिट्ठदि, दाव णीलरसाणुआरिणा तमालपल्लवरसेण मुहं कालीकरिस्सं। (५२) (ग) [उत्थाय तमालपल्लवं निष्पीड्य विदूषकस्य मुखं कालीकरोति। नायको नायिका च विदूषकं पश्यतः]।

नायकः। वयस्य! धन्यः खल्वसि, योऽस्मासु तिष्ठत्सु भवानेवं वर्ण्यते। (घ)

नायिका। [नायकस्य मुखं दृष्ट्वा स्मितं करोति]।

नायकः। [नायिकामुखं दृष्ट्वा]—

स्मितपुष्पोद्गमोऽयं ते दृश्यतेऽधरपल्लवे।
फलं त्वन्यत्र मुग्धाक्षि! चक्षुषोर्मम पश्यतः॥ १२॥

विदूषकः। भोदि! किं तुए किदं? (५३)

चेटी। णं वण्णिदोसि। (५४)

(५२) यावदेष निमीलिताक्षस्तिष्ठति, तावन्नीलरसानुकारिणा तमालपल्लवरसेन मुखं कालीकरिष्यामि।

(५३) भवति! किं त्वया कृतम्?

(५४) ननु वर्णितोऽसि।

(ग) नीलेति।—नीलं रसम् अनुकरोतीति तेन नीलद्रवसदृशेन। कालीकरिष्यामि कृष्णीकरिष्यामि।

(घ) अस्मासु तिष्ठत्सु तिष्ठतोऽस्मान् अनादृत्य [अनादरे सप्तमी]।

स्मितेति।—मुग्धाक्षि! मुग्धे सुन्दरे अक्षिणी यस्याः तत्सम्बुद्धौ, [अक्षिशब्दात् बहुव्रीहौ षच् ततो ङीष्] हे सुलोचने! ते तव, अधर एव पल्लवः नवकिसलयः तत्र, अयं स्मितमेव पुष्पं, तस्य उद्गमः उदयः, तु किन्तु, फलम् अन्यत्र पल्लवादन्यस्मिन् स्थाने, पश्यतो मम चक्षुषोः दृश्यते यत्र पुष्पोद्गमस्तत्रैव फलोत्पत्तिरिति प्रसिद्धिः, इदन्तु विपरीतं, तवाधरे स्मितपुष्पं, मम चक्षुषोस्तु तद्दर्शनजनितानन्दरूपं फलमिति भावः। [अत्र असङ्गतिनामालङ्कारः—"कार्यकारणयोर्भिन्नदेशतायामसङ्गतिः" इत्युक्तेः; सा च स्मिते पुष्पस्य अधरे च पल्लवस्य आरोपात् रूपकेणानुप्राणिता]॥१२॥

विदूषकः। [हस्तेन मुखं प्रमृज्य दृष्ट्वा सरोषं दण्डकाष्ठमुद्यम्य]। आः दासीए धीए! राअउलं क्खु एदं, किं तुए करिस्सं? [नायकं निर्दिश्य] भो! तुम्हाणं पुरदो अहं दासीए धीआए खलीकिदो! (ङ) ता किं मम इध ट्ठिदेण? अण्णदो गमिस्सं। (५५) [निष्क्रामति]।

चेटी। कुविदो मे अज्ज अत्तेओ, जाव णं गदुअ पसादइस्सं। (५६)

नायिका। हंजे चदुरिए! किं मं एआइणीं उज्झिअ गच्छसि? (५७)

चेटी। [नायकं निर्दिश्य सस्मितम्] एव्वं एआइणी चिरं होहि। (च) (५८) [इति निष्क्रान्ता]।

नायकः। [नायिकाया मुखं पश्यन्]—

दिनकरकरैर्मृष्टं बिभ्रत द्युतिं परिपाटलां
दशनकिरणैः संसर्पद्भिः स्फुटीकृतकेसरम्।
यदि मुखमिदं मुग्धे! सत्यं समं कमलेन ते
मधु मधुलिहः किन्नैतस्मिन् पिबन् प्रविभाव्यते?॥१३॥

(५५) आः दास्याः पुत्रि! राजकुलं खल्वेतत्, किं तव करिष्यामि? भोः! युष्माकं पुरतोऽहं दास्याः पुत्र्या खलीकृतः! तत् किं ममेह स्थितेन? अन्यतो गमिष्यामि।

(५६) कुपितो मे आर्य आत्रेयः; यावदेनं गत्वा प्रसादयिष्यामि।

(५७) हञ्जे चतुरिके! किं मामेकाकिनीम् उज्झित्वा गच्छसि?

(५८) एवमेकाकिनी चिरं भव।

---

(ङ) खलीकृतः अधमीकृतः, अपकृत इत्यर्थः, ("खलं भूस्थानकल्केषु नीच-क्रूराधमे त्रिषु।" इति मेदिनी)।

(च) स्वामिसकाशे सर्वस्त्रीभिरेव नारीभिः प्रधानतया प्रार्थ्यते, तदेवात्र आशीर्वादरूपेण कथ्यते।

दिनकरकरैरिति।—मुग्धे! हे सुन्दरि! इदं ते तव, मुखं दिनकरस्य सूर्यस्य, करैः किरणैः, मृष्टं स्पृष्टम्, अत एव परिपाटलां परितो रक्तां, द्युतिं कान्तिं, बिभ्रत् दधत् सत्, तथा संसर्पद्भिः प्रसरद्भिः, दशनानां दन्तानां, किरणैः स्फुटीकृतः

नायिका। [विहस्य मुखमन्यतो नयति]।

नायकः। [तदेव पठति]।

चेटी। [पटाक्षेपेण (छ) प्रविश्य सम्भ्रमम्]। एसो क्खु अज्जमित्तावसू कज्जेण केणावि कुमारअं पेक्खिदुमिच्छदि। (५८)

नायकः। प्रिये! गच्छ त्वमात्मनो गृहम्, अहमपि मित्रावसुं दृष्ट्वा त्वरितमागत एव।

नायिका। [चेट्या सह निष्क्रान्ता]।

[ततः प्रविशति मित्रावसुः]।

मित्रा।—

अनिहत्य तं सपत्नं कथमिव जीमूतवाहनस्याहम्।
कथयिष्यामि हृतं तव राज्यं रिपुणेति निर्लज्जः?॥ १४॥

अनिवेद्य च न युक्तं गन्तुमिति निवेद्य गच्छामि। कुमार! मित्रावसुः प्रणमति।

(५८) एष खल्वार्यमित्रावसुः कार्येण केनापि कुमारं प्रेक्षितुमिच्छति।

व्यस्तोक्तिगाः, केसरा किञ्जल्काः; यच्च तयोक्तं यत्, यदि सत्यं कमलेन समं दृश्यते इति शेषः, तदा मधुलिट्: भ्रमरः एतस्मिन् तव मुखकमले मधु पिबन् किं कथं, न प्रतिभाव्यते? न लक्ष्यते? मधुकरत्वात् मधुपानं युक्तमिति भावः। [अत्र दशनकेसर-वानां केसरत्वं रूपकं, तदनुप्राणिता उपमा च; तथा भ्रमरस्य मधुपानादिरूपा-प्रस्तुतात् मत्प्रियावदनकमले मन्मुखकमलेऽधरं तवैव मधुपानं युक्तम् इति प्रस्तुतं गम्यते, अतोऽप्रस्तुतप्रशंसाऽलङ्कारः इत्येषां संसृष्टिः]। हरिणी वृत्तम्॥ १३॥

(छ) पटाक्षेपेण पटस्य जवनिकायाः, अक्षेपेण अपातनेन, पटपरिवर्तन-मकृत्वैवेत्यर्थः।

अनिहत्येति।—अहं जीमूतवाहनस्य तं राज्यापहारिणमित्यर्थः, सपत्नं शत्रुम्, अनिहत्य अविनाश्य, निर्लज्ज सन् रिपुणा तव राज्यं हृतमिति कथमिव कथयिष्यामि? एतत्कथने मम लज्जा भवतीति भावः॥ १४॥

नायकः। [मित्रावसुं दृष्ट्वा] मित्रावसो! इत आस्यताम्।

मित्रावसुः। [निःश्वस्य उपविशति]।

नायकः। [निरूप्य] मित्रावसो! संरब्ध इव लक्ष्यसे? (ज)

मित्रा। कः खलु मतङ्गहतके संरम्भः? (झ)

नायकः। किं कृतं मतङ्गेन?

मित्रा। स्वनाशाय किल युष्मदीयं राज्यमाक्रान्तम्।

नायकः। [सहर्षमात्मगतम्] अपि नाम सत्यमेतत् स्यात्?

मित्रा। अतस्तदुच्छित्तये (ञ) आज्ञां दातुमर्हति कुमारः। किं बहुना—

संसर्पद्भिः समन्तात् कृतसकलवियन्मार्गयानैर्विमानैः
कुर्वाणाः प्रावृषीव स्थगितरविरुचः श्यामतां वासरस्य।
एते याताश्च सद्यस्तव वचनमितः प्राप्य युद्धाय सिद्धाः
सिद्धश्चोद्वृत्तशत्रुक्षयभयविनमद्राजकं ते स्वराज्यम्॥ १५॥

---

(ज) संरब्ध इव सम्भ्रान्त इव, संक्रुद्ध इव वा। ("संरम्भः सम्भ्रमे कोपे" इत्यमरः)। लक्ष्यसे प्रतीयसे।

(झ) कः खलु मतङ्गहतके संरम्भः?—मतङ्गहतकं प्रति संरम्भः कः? विना संरम्भेणैव तं हनिष्यामीति भावः।

(ञ) तस्य मतङ्गस्य, उच्छित्तिः उच्छेदः, विनाश इति यावत्, तस्यै।

संसर्पद्भिरिति।—एते सिद्धाः तव वचनं प्राप्य समन्तात् संसर्पद्भिः प्रसरद्भिः, कृतं सकलस्य सर्वस्य, वियतः आकाशस्य, मार्गे यानं सञ्चारो यैः तथाभूतैः, विमानैः व्योमयानैः, प्रावृषीव वर्षास्विव, ("स्त्रियां प्रावृट् स्त्रियां भूम्नि वर्षाः" इत्यमरः) स्थगिताः तिरोहिताः, रवेः सूर्यस्य, रुचो द्युतयः यत्र तादृशस्य, वासरस्य दिवसस्य, श्यामतां कुर्वाणाः सन्तः, सद्यः झटिति, इतः स्थानात् प्रदेशात्, युद्धाय याताः गन्तुमुद्यता इत्यर्थः, उद्वृत्ता उन्मार्गं गता उद्धताः दृप्ताः, दुष्टा इति यावत् तेषां, शत्रूणां यत् क्षयभयम् अन्तकालिकं भयं, तेन विनमत् प्रवणीभवत्, राजकं राजसमूहो यस्मिन् तथाभूतं, ते तव, स्वराज्यं सिद्धञ्च निष्पन्नञ्च, अविलम्बेन अनुष्ठानात् अद्भुतं भवितेति भावः। [अत्र हि कारणीभूतस्य भाविनः सिद्धसैन्ययानस्य कार्य्यभूतायाः अविलम्बात् राज्यसिद्धेः, समकालोत्पत्त्या भूतवद्वर्णनेन कार्य्य हेत्वोः पौर्वापर्य्यविपर्य्यया

अथवा, किं बलीये ?—

एकाकिनाऽपि हि मया रभसावकृष्ट-
निस्त्रिंशदीधितिसटाभरभासुरेण ।
आरादुपेत्य हरिणेव मतङ्गजेन्द्रम्
आजौ मतङ्गहतकं हतमेव विद्धि ॥ १६ ॥

नायकः । [ कर्णौ पिधाय आत्मगतम् ] अहह ! दारुणमभिहितम् !! अथवा एवं तावत् । [ प्रकाशम् ] मित्रावसो ! किमप्येतत् ? बहुतरमपि बाहुशालिनि त्वयि सम्भाव्यते । (ट) किन्तु—

स्वशरीरमपि परार्थे यः खलु दद्यादयाचितः कृपया ।
राज्यस्य कृते स कथं प्राणिवधक्रौर्यमनुमन्ये ? ॥ १७ ॥

अतिशयोक्तिरलङ्कारः, तथा याम-सिद्ध्योः क्रिययोः युगपत् कथनात् समुच्चयालङ्कारः [ इत्यनयोः संसृष्टिः ] । स्रग्धरा वृत्तम् ॥ १५ ॥

एकाकिनेति ।—मया एकाकिनाऽपि निःसहायेनापि, हि रभसेन वेगेन, अवकृष्टः आकृष्टः, यः निस्त्रिंशः खड्गः, [ निर्गतस्त्रिंशतोऽङ्गुलिभ्यः इति समासान्त डच् प्रत्ययः, त्रिंशदङ्गुल्यधिकस्यैव खड्गत्वं, ततो न्यूनत्वे क्षुरिका ] तस्य दीधितयः प्रभाः, सटा इव जटा इव, तासां भरेण अतिरेकेण, भासुरः समुज्ज्वलः तादृशेन सता, हरिणा सिंहेन, मतङ्गजेन्द्रं हस्तीन्द्रमिव, आजौ युद्धे, आरात् समीपे, अचिरमेवेत्यर्थः, निपत्य मतङ्गहतकं हतमेव नाशितमेव, विद्धि अवगच्छ । [ उपमाऽलङ्कारः ] । वसन्ततिलकं वृत्तं—"उक्तं वसन्ततिलकं त-भ जा ज-गौ गः" इति लक्षणात् ॥ १६ ॥

(ट) पिधाय आच्छाद्य । [ अपि-पूर्वकात् धा-धातोर्ल्यप् प्रत्ययः, अपेरकारस्य लुक् च, पक्षे—"अपिधाय" इत्यपि पदं भवति ] । किमप्येतत् अल्पमात्रमेतत्, मतङ्गं विनाश्य मम राज्योद्धरणं भवत्समीपे अतितुच्छमित्यर्थः, बाहुशालिनि भुजवीर्यसम्पन्ने, त्वयि बहुतरमपि सम्भाव्यते, त्वादृशो महावीरः एतस्मादपि कठोरतमं कार्यं कर्तुं शक्नुयादिति भावः ।

स्वशरीरमिति ।—यः खलु अयाचितः अप्रार्थितोऽपि, कृपया परार्थं स्वशरीरमपि दद्यात्, [ सामान्यवत् व्यवहारात् प्रथमपुरुषः ] सः, अहमिति शेषः, राज्यस्य कृते निमित्तं, [ कृते इत्यव्ययम् ] प्राणिवधक्रौर्यं जीवहिंसारूपनिष्ठुरतां,

अपि च—क्लेशान् विहाय मम शत्रुबुद्धिरेव नान्यत्र। यदि त्वमस्माप्रियं कर्त्तुमीहसे, तदनुकम्प्यतामसौ क्लेशदासीकृतो राज्यस्य कृते राज्यस्य तपस्वी । (ठ)

मित्रा । [सामर्षम्] कथं नानुकम्पनीय ईदृशोऽस्माकमुपकारी कृपणश्च !! (ड)

नायकः । [स्वगतम्] अनिवार्य्यसंरम्भः कोपाक्षिप्तचेता न तावदयं शक्यते निवर्त्तयितुम् ; तदेवं तावत् । [प्रकाशम्] मित्रावसो ! उत्तिष्ठ, अभ्यन्तरमेव प्रविशावः, तत्रैव तावत् त्वां बोधयिष्यामि, सम्प्रति परिणतमहः । (ढ) तथा हि—

निद्रामुद्रावबन्धव्यतिकरमनिशं पद्मकोशादपास्यन्
आशापूरैककर्मप्रवणनिजकरप्राणिताशेषविश्वः ।

कर्त्तुमिति शेषः, कथम् अनुमन्ये ? कथमनुमोदनं करोमीत्यर्थः । आर्य्या वृत्तम् ॥ १८ ॥

(ठ) क्लेशानिति ।—जनानां क्लेश एव मम शत्रुरिति भावः । ईहसे चेष्टसे, इच्छसीत्यर्थः । क्लेशदासीकृतः क्लेशपरतन्त्रः । राज्यस्य कृते राज्यलाभार्थम् । तपस्वी वराकः ।

(ड) सामर्षं सक्रोधम् । नानुकम्पनीय इति श्रीस्रुपठनीयः । कृपणः क्षुद्रः ।

(ढ) अनिवार्य्यसंरम्भः दुर्निवारक्रोधः । कोपेति ।—कोपेन आक्षिप्तं व्याकुलीकृतं, चेतो हृदयं यस्य तादृशः । अयं मित्रावसुः । बोधयिष्यामि विज्ञापयिष्यामि, विज्ञानार्थं विशेषेण कथयिष्यामीत्यर्थः । परिणतम् अवसानप्राय-मित्यर्थः । अहः दिनम् ।

निद्रेति ।—पद्मकोषात् कमलकुड्मलात्, पद्ममुकुलादित्यर्थः, ("कोषोऽस्त्री कुड्मले खड्गपिधाने" इति विश्वः) अनिशं सततं, निद्रा अविकासः, स एव मुद्राऽवबन्धः सङ्कोचावस्थानं, तस्य व्यतिकरं सम्बन्धम्, अपास्यन् निराकुर्वन्, तथा आशानां दिशां, पूरः स्वतेजसा पूरणमेव, एकं मुख्यं, कर्म, [आशा जीवानां प्रार्थना, तस्याः पूरः पूरणं, सफलीकरणमिति यावत्, तदेव एकं कर्म इति ध्वनिः] तस्मिन् प्रवणैः निरतैः, निजकरैः स्वांशुभिः, [स्वहस्तैरिति ध्वनिः] प्राणितं जीवितम्, अशेषं

दृष्टः सिद्धैः प्रसक्तस्तुतिमुखरमुखैरस्तमप्येष गच्छन्
एकः श्लाघ्यो विवस्वान् परहितकरणायैव यस्य प्रसादः॥ १८ ॥

[ इति निष्क्रान्ताः सर्वे ]।

इति तृतीयोऽङ्कः।

कृत्स्नं, विश्वं जगत् येन तथाभूतः, किञ्च, अस्तं गच्छन्नपि प्रसक्ताभिः निरन्तराभिः, स्तुतिभिः मुखराणि शब्दितानि, मुखानि येषां तादृशैः, सिद्धैः देवयोनिविशेषैः, दृष्टः निरीक्षितः, एषः एकः अद्वितीयः, विवस्वान् सूर्यः, श्लाघ्यः प्रशस्यः; यस्य सूर्यस्य, प्रसादः उदयः प्रसन्नता च, परेषां हितकरणाय लोकानुग्रहाय एव। [ "प्रसादः" इत्यत्र "प्रकाशः" इति पाठान्तरम्, अर्थस्त्वेक एव ] यतो जगद्धितार्थम् एव उदेति, अतः श्लाघनीय इति निष्कर्षः। यथा हि भगवान् विवस्वान् केवलं लोकानामुपकारायैव उदेति, तथा महतामपि लोकोपकारकरणमेव युक्तम्, अतस्त्वमपि मतङ्गम अविनाश्य तस्यैव छन्दानुवर्त्तित्वं कृत्वा तत्प्रार्थनापूरणं कुरु इति व्यङ्ग्यार्थः। [ अत्र शिष्टपरम्परितरूपकोत्प्रेक्षयोः संसृष्टिः ]। स्रग्धरा वृत्तम् ॥ १८ ॥

---

# अथ चतुर्थोऽङ्कः।

[ ततः प्रविशति कञ्चुकी गृहीतरक्तवस्त्रयुगलः प्रतीहारश्च ]। (क)

कञ्चुकी।—

अन्तःपुराणां विहितव्यवस्थः
पदे पदे संस्खलितानि पश्यन्।
जरातुरः सम्प्रति दण्डनीत्या
सर्वां नृपस्यानुकरोमि वृत्तिम्॥ १ ॥

(क) कञ्चुकी "अन्तःपुरचरो वृद्धो विप्रो गुणगणान्वितः। सर्वकार्यार्थकुशलः कञ्चुकीत्यभिधीयते॥" इत्युक्तलक्षणः पुरुषः। गृहीतरक्तवस्त्रयुगलः गृहीतं रक्तवस्त्रयोः युगलं येन तादृशः, कञ्चुकिनः विशेषणम्। प्रतीहारः द्वाररक्षकः।

अन्तःपुराणामिति।—जरातुरः जरया वार्द्धकेन, आतुरः आर्त्तः, अहमिति शेषः,

प्रती। आर्य्य वसुभद्र! क्व नु खलु भवान् प्रस्थितः?

कञ्चुकी। आदिष्टोऽस्मि देव्या मित्रावसुजनन्या—"कञ्चुकिन्! दशरात्रं त्वया यावन्मलयवत्या जामातुश्च रक्तवासांसि नेतव्यानि"। दुहिता च श्वशुरकुले वर्त्तते। जीमूतवाहनोऽपि युवराजेन सह समुद्रवेलां द्रष्टुमद्य गत इति श्रूयते, तन्न जाने, किं राजपुत्त्र्याः सकाशं गच्छामि, अथवा जामातुरिति।

प्रती। आर्य्य! वरं राजपुत्त्र्याः सकाशं गन्तव्यम्; तत्र हि कदाचिदस्यां वेलायां जामाता स्वयमेवागतो भविष्यति।

कञ्चुकी। साधूक्तम्। अथ भवान् पुनः क्व प्रस्थितः?

प्रती। आदिष्टोऽस्मि महाराजविश्वावसुना, यथा—"भोः सुनन्द! गच्छ, मित्रावसुं ब्रूहि, 'अस्मिन् दीपप्रतिपदुत्सवे (ख) मलयवत्या जामातुश्च यत् किञ्चित् प्रदीयते, तदुत्सवानुरूपं किञ्चिदागत्य चिन्त्यताम्' इति"।

अन्तःपुराणां राज्ञावरोधानां, ("स्त्र्यगारं भूभुजामन्तःपुरं स्यादवरोधनम्" इत्यमरः) विहिता कृता, व्यवस्था येन तथाभूतः, पदे पदे प्रतिपदविक्षेपं, प्रतिविषयञ्च, संस्खलितानि पदस्खलनानि, अनवधानविजृम्भितानि च, पश्यन् सम्प्रति दण्डनीत्या यष्टिग्रहणेन, दण्डविधायकनीतिशास्त्रेण च, नृपस्य राज्ञः, सर्वं वृत्तम् आचारम्, अनुकरोमि अनुसरामीत्यर्थः। [अत्र श्लेषानुप्राणितोपमाऽलङ्कारः]। उपजाति वृत्तं—"स्यादिन्द्रवज्रा यदि तौ ज-गौ गः" इति, "उपेन्द्रवज्रा प्रथमे लघौ सा" इति, "अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः" इति च तल्लक्षणात् ॥ १ ॥

(ख) दीपप्रतिपदुत्सवे दीपप्रतिपन्नाम कश्चित् उत्सवः दीपदानरूपानन्दजनकव्यापारविशेषः, स च कार्त्तिकस्य प्रतिपदि तिथौ क्रियते, अतस्तदुत्सवो दीपप्रतिपदिति कथ्यते, तत्र।

[ ततः प्रविशति जीमूतवाहनो मित्रावसुश्च ] ।

नायकः ।—

शय्या शाद्वलमासनं शुचिशिला सद्म द्रुमाणामधः
शीतं निर्झरवारि पानमशनं कन्दाः सहाया मृगाः ।
इत्यप्रार्थितलभ्यसर्वविभवे दोषोऽयमेको वने
दुष्प्रापार्थिनि यत् परार्थघटनावन्ध्यैर्वृथा स्थीयते ॥ २ ॥

मित्रा । [ ऊर्ध्वमवलोक्य ] कुमार ! त्वर्यतां त्वर्यताम् ; समयोऽयं चलितुमम्बुराशेः । ( ग )

नायकः । [ आकर्ण्य ] सम्यगुपलक्षितम्—

उन्मज्जज्जलकुञ्जरेन्द्ररभसाऽऽस्फालानुबन्धोद्धतः
सर्वाः पर्वतकन्दरोदरभुवः कुर्वन् प्रतिध्वानिताः ।
उच्चैरुच्चरति ध्वनिः श्रुतिपथोन्माथी यथाऽयं तथा
प्रायः प्रेङ्खदसङ्ख्यशङ्खधवला वेलेयमागच्छति ॥ ३ ॥

शय्येति ।—शाद्वलं नवतृणं, शय्या शयनीयं, शुचिशिला पवित्रपाषाणम्, आसनं, द्रुमाणां वृक्षाणाम्, अधः तलं, सद्म आवासः, शीतं शीतलं, निर्झरवारि पीयते यत् इति पानं, कन्दाः मूलविशेषाः, अशनं भोज्यं वस्तु इत्यर्थः, मृगाः पशवः, सहायाः सहचराः ; इति इत्थम्, अप्रार्थितः अयाचितः एव, लभ्यः सर्वविभवः सकलसम्पत् यस्मिन् तादृशे, वने अयम् एकः दोषः यत् दुष्प्रापाः दुर्लभाः, अर्थिनो याचकाः यत्र तादृशे, अर्थिरहिते इत्यर्थः, यस्मिन् इति शेषः, परार्थघटनायां परकार्य्यकरणे, वन्ध्यैः विफलैः, परकार्य्यमकुर्वाणैरित्यर्थः, वृथा स्थीयते विफलं कालो नीयते इत्यर्थः । [ अत्र "दुष्प्रापार्थिनि" "परार्थघटनावन्ध्यैः" इति विशेषणद्वयेन पार्थप्राप्तिरेव जीवनसाफल्यं, नान्यथेति अभिप्रायप्रकटनात् परिकरालङ्कारः । तल्लक्षणं यथा—"उक्तिर्विशेषणैः साभिप्रायैः परिकरो मतः" इति ] । शार्दूलविक्रीडितं वृत्तम् । २ ।

( ग ) कालनिर्णयाय सूर्यं द्रष्टुमूर्ध्वनिरीक्षणम् । समयः समुद्रजलोच्छ्वाससमय इत्यर्थः ।

पयःपूरागमनं वर्णयति, उन्मज्जदिति ।—उन्मज्जताम् उत्पतताम्, जलकुञ्जरेन्द्राणां जलहस्तिश्रेष्ठानां, रभसेन वेगेन, यः आस्फालः पुच्छाघातेन जलालोडनं, तस्य अनुबन्धेन सातत्येन, उद्धतः उत्कटतां नीतः, तथा सर्वाः पर्वतानां याः कन्दराः गुहाः,

मित्रा। नन्वियमागतैव, पश्य—

कवलितलवङ्गपल्लवकरिमकरोद्गारिसुरभिणा पयसा।
एषा समुद्रवेला रत्नद्युतिरञ्जिता भाति ॥ ४ ॥

नायकः। मित्रावसो! पश्य पश्य, शरत्समयपाण्डुभिः पयोदपटलैः प्रावृताः प्रालेयाचलशिखरश्रियमुद्वहन्त्येते मलयसानवः। (घ)

तासाम् उदरभुवः अभ्यन्तरभागान्, प्रतिध्वानिताः प्रतिध्वनियुताः, [ "प्रतिध्वानिनी:" इति पाठेऽपि स एवार्थः ] कुर्वन्, अत एव श्रुतिपथोन्माथी कर्णविवरविदारी, अयम् उर्मेः महान्, ध्वनिः यथा यदा इत्यर्थः, उच्चरति उद्गच्छति, तथा तदा इत्यर्थः, प्रेङ्खद्भिः चलद्भिः, चमद्भिः शङ्खैः सह इयं वेला समुद्रजलविकारः, समुद्रजलोच्छ्रास इत्यर्थः, ("वेला काले च सीमायामब्धेः कूलविकारयोः" इति मेदिनी) प्रायो बाहुल्येन, आगच्छति उत्पतति, इति मन्ये इति शेषः। [ उत्प्रेक्षाऽलङ्कारः, छेकानुप्रासश्च ] [ शार्दूलविक्रीडितं वृत्तम् ॥ ३ ॥

कवलितेति।—एषा समुद्रवेला सागरतटी ("वेला काले च जलधेः तीरनीरविकारयोः" इति विश्वः) कवलिताः भक्षिताः, लवङ्गपल्लवा यैः, तत्रैव लवङ्गलतानां बाहुल्यात्, तादृशान् करिणो जलहस्तिनः, मकरान् जलजन्तुविशेषांश्च, करिमकरान् वा, उद्गिरति उद्वमतीति तथोक्तम् ; यद्वा—कवलितलवङ्गपल्लवानां करिणां मकराणाञ्च उद्गाराः ऊर्द्ध्वगताः, मुखेन अन्तर्गतवायोर्बहिर्गमनानीत्यर्थः, लवङ्गपल्लवान् कवलयितुं यान् उद्गारान् अकुर्वन् तेषां गन्धा इति भावः, ते अत्र सन्तीति तादृशम्, अत एव सुरभि लवङ्गपल्लवगन्धसम्पर्कात् सुगन्धि तेन, पयसा जलेनोपलक्षिता, तथा रत्नानां समुद्रगर्भस्थितानामिति भावः, द्युतिभिः कान्तिभिः, रञ्जिता सती भाति राजते। [ अत्र वेलोद्भासकस्य हेतुद्वयस्य वाक्यगतत्वात् काव्यलिङ्गमलङ्कारः ]। आर्या वृत्तम् ॥ ४ ॥

(घ) शरत्समयपाण्डुभिः शरदागमशुभ्रैः, पयोदपटलैः मेघनिचयैः, प्रावृताः आच्छादिताः, अत एव प्रालेयाचलस्य हिमशैलस्य, ("अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम्। प्रालेयं मिहिका च" इत्यमरः)। शिखरश्रियं शृङ्गशोभाम्। मलयसानवः मलयपर्वततटाः।

मित्र। नैवामी मलयसानवः, नागानामस्थिसङ्घाताः (ङ) खल्वमी।

नायकः। [सोद्वेगम्] कष्टम् !! किं निमित्तममी सङ्घातमृत्यवो जाताः? (च)

मित्र। कुमार! नैवामी सङ्घातमृत्यवः, श्रूयतां यथैतत्। इह किल स्वपक्षपवनापास्तसमस्तसागरजलपूरं रसातला-दुद्धृत्य प्रतिदिनमेकैकं नागमाहारयति वैनतेयः। (छ)

नायकः। [सोद्वेगम्] कष्टम् !! अतिदुष्करं करोति, ततस्ततः?

मित्र। ततः सकलनागविनाशाऽऽशङ्किना वासुकिना गरुत्मान् अभिहितः।

नायकः। [सादरम्] किं, मां प्रथमं भक्षयेति?

मित्र। न हि न हि।

नायकः। किमन्यत्?

मित्र। इदमुक्तं—"त्वदभिपातसन्त्रासात् सहस्रशः स्रवन्ति भुजङ्गमानां गर्भाः, शिशवश्च पञ्चत्वमुपयान्ति, एवञ्च सन्तति-विच्छेदोऽस्माकं, तव चैवं स्वार्थहानिः, तत् यदर्थमभिपतति भवान् नागलोकं, तमिह नागमेकैकमनुदिनं (ज) प्रेषयामि।"

---

(ङ) नागानां पन्नगानाम्। अस्थिसङ्घाताः अस्थिराशयः।

(च) अमी नागाः। सङ्घातमृत्यवः सङ्घातेन संहत्या, मिलितभावेनेत्यर्थः, मृत्युर्येषां तथोक्ताः, युगपत् बहवो मृता इत्यर्थः।

(छ) स्वपक्षेति।—स्वस्य गरुडस्येत्यर्थः, पक्षयोः पवनेन [illegible]वेगापतनजनितेन इति भावः, अपास्तः चालितः, ताडितः इत्यर्थः, समस्तः सागरजलस्य पूरः प्रवाहो यस्मिन् तद्यथा तथा। रसातलात् पातालात्। आहारयति भक्षयति, [आहारं करोति इत्यर्थे आहार-शब्दात् णिच्-प्रत्ययः, ततो लटि प्रथमपुरुषैकवचनम्]। वैनतेयः विनतानन्दनो गरुड इत्यर्थः।

(ज) त्वदभिपातसन्त्रासात् तव अभिपातः आपतनं, तस्मात् यः सन्त्रासः भयं तस्मात्। सहस्रशः सहस्राणां सहस्राणामित्यर्थः, ["संख्यैकवचनाच्च वीप्सायाम्",

नायकः। कथम्!! (न?) रक्षिता नागराजेन (झ) पन्नगाः!!—
जिह्वासहस्रद्वितयस्य मध्ये
नैकाऽपि सा तस्य किमस्ति जिह्वा।
एकाहिरक्षार्थमहिद्विषेऽद्य
दत्तो मयाऽऽत्मेति यया ब्रवीति? ॥ ५ ॥

मित्रा। प्रतिपन्नं तत् (ञ) पक्षिराजेन।
इत्येष भोगिपतिना विहितव्यवस्थो
यान् भक्षयत्यहिपतीन् पतगाधिराजः।
यास्यन्ति यान्ति च गताश्च दिनैर्विवृद्धिं
तेषाममी तुहिनशैलरुचोऽस्थिकूटाः ॥ ६ ॥

(५।४।४३पा०) इति वीप्सायां शस्]। स्रवन्ति च्यवन्ते। भुजङ्गमानां नागानाम्। [illegible] स्रवन्ति। एवञ्च एवं कृते इत्यर्थः। सन्ततिविच्छेदः वंशलोपः, ("सन्ततिर्गोत्रजनन-कुलान्यभिजनान्वयौ। वंशः—" इत्यमरः)। स्वार्थहानिः नागवंश-लोपात् निजाहारव्याघातः। अनुदिनं [दिने दिने इति वीप्सायामव्ययीभावः] प्रतिदिनम्।

(झ) नागराजेन वासुकिना।

जिह्वेति।—तस्य नागराजस्य, जिह्वासहस्रद्वितयस्य सहस्रशिरस्त्वात् जिह्वासहस्रं तथा द्विजिह्वत्वाच्च तस्य द्विसहस्रजिह्वत्वं बोध्यं, मध्ये सा एकाऽपि जिह्वा किं नास्ति? यया जिह्वया, एकस्यापि अहेः नागस्य, रक्षार्थम् अहिद्विषे नागशत्रवे गरुत्मते, अद्य मया आत्मा दत्त इति ब्रवीति? स इति शेषः। [नागराजेन वासुकिना सहस्रद्वितय-जिह्वाविशिष्टेनापि एकस्याप्यहेर्जीवनरक्षार्थे स्वशरीरदानं न कथितं, परमेकजिह्वा-विशिष्टेन मया तत् कर्तुं शक्यते इति भङ्ग्या गम्यार्थप्रकटनात् पर्यायोक्तमलङ्कारः। तल्लक्षणं यथा—"पर्यायोक्तं यदा भङ्ग्या गम्यमेवाभिधीयते" इति]। इन्द्रवज्रा वृत्तम् ॥ ५ ॥

(ञ) प्रतिपन्नं स्वीकृतं, तत् नागराजवचनमित्यर्थः।

इत्येति।—भोगः फणः ("भोगः सुखे धने पुंसि (चाहेः) शरीरफणयोरपि" इति मेदिनी) स एषामस्तीति भोगिनः सर्पाः, ("उरगः पन्नगो भोगी" इति सर्पपर्याये

नायकः। आश्चर्य्यम् !!!—

सर्वाशुचिनिधानस्य कृतघ्नस्य विनाशिनः।
शरीरकस्यापि कृते मूढाः पापानि कुर्वते !! ॥ ७ ॥

अहो ! कष्टपर्य्यवसानेयं विपत्तिर्नागानाम् !! [आत्मगतम्] अपि शक्नुयामहं (ट) स्वशरीरसमर्पणेन एकस्य नागस्य प्राणपरिरक्षां कर्त्तुम् ?

[ततः प्रविशति प्रतीहारः]।

प्रती। आरूढोऽस्मि गिरिशिखरं, यावन्मित्रावसुम् अन्विष्यामि। [परिक्रम्य] अयं मित्रावसुजामातुः समीपे तिष्ठति। [उपसृत्य] विजयेतां (ठ) कुमारौ।

---

अमरः ) तेषां पतिः तेन भोगिपतिना नागराजेन, इति इत्थं, विहिता कृता, व्यवस्था यस्य तथाविधः, एष पतगानां पक्षिणाम्, अधिराजः पतगाधिराजः गरुडः, यान् अहिपतीन् नागेन्द्रान्, भक्षयति, तेषाम् अहिपतीनां, तुहिनशैलतटाः हिमाचलतुल्य-शुभ्राः, अमी अस्थिकूटाः अस्थिनिचयाः, दिनैः कालेन, [अपवर्गे तृतीया] विवृद्धिं विशेषेण वृद्धिं, यान्ति प्राप्तिं गताश्च। ["तुहिनशैलतटाः" इत्यत्र उपमाऽलङ्कारः]। वसन्ततिलकं वृत्तम् ॥ ६ ॥

सर्वेति।—मूढाः निर्बुद्धयः, अज्ञा इत्यर्थः, सर्वेषाम् अशुचीनाम् अमेध्यानां, मलमूत्रादीनामित्यर्थः, निधानस्य आश्रयस्य, कृतघ्नस्य रक्षार्थम् अन्नादिदानेन उपकारे कृतेऽपि आत्मनो मृत्योः प्रतिबन्धकभोगायतनत्वात् प्रत्युपकारमकर्त्तुरित्यर्थः, विनाशिनः अवश्यमेव विध्वंसिनः, अपि शरीरकस्य तुच्छशरीरस्य, [कुत्सार्थे कन्] कृते निमित्तं, पापानि कुर्वते आचरन्ति, एवंविधशरीरपोषणार्थं जीवहिंसादिकं पाप-मनुतिष्ठन्तीत्यर्थः। [अत्र सर्वाशुचीत्यादिविशेषणचयेन अतितुच्छशरीरस्यार्थं पापकर्म कदाऽपि नैव कर्त्तव्यमित्यभिप्रायसूचनात् परिकरालङ्कारः। तदुक्तं दर्पणे— "उक्तिर्विशेषणैः साभिप्रायैः परिकरो मतः" इति ॥ ७ ॥

(ट) अहो इति खेदसूचकमव्ययम्। कष्टं पर्यवसानम् अन्तो यस्यास्तादृशी कष्टपर्य्यवसाना दुरन्ता। अपि प्रश्ने। [शक्नुयामिति "शकि लिङ् च" (३।३।१७२ पा०) इति लिङ्]।

(ठ) ["विपराभ्यां जेः" (१।३।१९ पा०) इत्यात्मनेपदम्]।

मित्रा। सुनन्द ! किं-निमित्तमिहागमनम् ?

प्रतीहारः। [ कर्णे कथयति ]।

मित्रा। कुमार ! तातो मामाह्वयति।

नायकः। गम्यताम्।

मित्रा। कुमारेणापि बहुप्रत्यवाये (ड) अस्मिन् प्रदेशे न चिरं स्थातव्यम्। [ इति निष्क्रान्तः ]।

नायकः। यावदहमप्यस्माद्गिरिशिखरादवतीर्य्य समुद्रतट-मवलोकयामि। [ परिक्रामति ]।

[ नेपथ्ये ]। हा पुत्तअ संखचूड़ ! कहं वावादिअमाणो अज्ज किल तुमं मए पेक्खिदव्वो ? (१)

नायकः। [ आकर्ण्य ] अये ! योषित इवार्त्तप्रलापः ! केयम् ? कुतो वाऽस्या भयमिति स्फुटीकरिष्ये। (ढ) [ परिक्रामति ]।

[ ततः प्रविशति रुदत्या वृद्धयाऽनुगम्यमानः शङ्खचूड़ो गोपायितवस्त्रयुगलश्च (ण) किङ्करः ]।

वृद्धा। [ सास्रम् ] हा पुत्तअ संखचूड़ ! कहं वावादिअमाणो अज्ज किल तुमं मए पेक्खिदव्वो ? [ चिबुकं गृहीत्वा ] तुमिणा मुहचंदेण विरहिअं दाणीं अंधआरीभविस्सदि पाआलं। (२)

---

(१) हा पुत्रक शङ्खचूड़ ! कथं व्यापाद्यमानोऽद्य किल त्वं मया प्रेक्षितव्यः ?

(२) हा पुत्रक शङ्खचूड़ ! कथं व्यापाद्यमानोऽद्य किल त्वं मया प्रेक्षितव्यः ? अनेन मुखचन्द्रेण विरहितमिदानीमन्धकारीभविष्यति पातालम्।

---

(ड) बहुप्रत्यवाये बह्वनिष्टकरे बहुपापजनके वा।

(ढ) योषितः स्त्रियः। आर्त्तप्रलापः कातरध्वनिः। अस्याः योषितः। स्फुटीकरिष्ये व्यक्तीकरिष्ये, अनुसन्धानेन ज्ञास्ये इत्यर्थः।

(ण) गोपायितेति।—गोपायितं रक्षितं, प्रच्छन्नं गृहीतमित्यर्थः; वस्त्रयुगलं येन तथोक्तः। किङ्करः नागराजानुचरः।

मल। अम्ब! किमिति वैक्लव्येन सुतरां नः पीडयसि? (त)

वृद्धा। [निर्वर्ण्य पुत्रस्याङ्गानि स्पृशन्ती]। हा पुत्तअ! कहं दे अदिट्ठसूरकिरणं सुउमारसरीरं णिग्घिणहिअओ (थ) गरुडो आहारइस्सदि?। (३) [कण्ठे गृहीत्वा रोदिति]।

मल। अम्ब! अलं परिदेवितेन, (द) पश्य—

क्रोडीकरोति प्रथमं यदा जातमनित्यता।
धात्रीव जननी पश्चात् तदा शोकस्य कः क्रमः? ॥८॥

[गन्तुमिच्छति]।

वृद्धा। पुत्तअ! चिट्ठ मुहुत्तअं, जाव दे वअणं पेक्खामि। (४)

---

(३) हा पुत्रक! कथं ते अदृष्टसूर्यकिरणं सुकुमारशरीरं निर्घृणो गरुड आहारयिष्यति?

(४) पुत्रक! तिष्ठ मुहूर्तं, यावत् ते वदनं प्रेक्षे।

---

(त) वैक्लव्येन कातर्येण, कातरभावेन इति यावत्। सुतराम् अत्यर्थम्। नः अस्मान्।

(थ) अदृष्टेति।—न दृष्टाः सूर्यकिरणाः येन तत्, आतपासहिष्णु इत्यर्थः। सुकुमारशरीरम् अतिकोमलदेहम्। निर्घृणः निष्करुणः, निर्दय इत्यर्थः, ("कारुण्यं करुणा घृणा" इत्यमरः)।

(द) परिदेवितेन विलपितेन।

अथ विलापपरित्यागकारणमाह, क्रोडीकरोतीति।—यदा अनित्यता अचिरस्थायित्वं, धात्रीव उपमातेव, जातम् उत्पन्नं सन्तानं, प्रथमं प्राक्, क्रोडीकरोति, क्रोडे धारयतीत्यर्थः, अङ्कीकरोतीति यावत्, जननी माता तु, पश्चात् क्रोडीकरोति, तदा शोकस्य कः क्रमः? 'कमाक्रमणम्? शोकः सर्वथा परिहर्त्तव्यः इत्यर्थः। प्रसवसमये हि यथा धात्री प्रथमं भूमिष्ठं सन्तानं धारयति, माता तु पश्चात्, तथा भूमिष्ठमेव सन्तानं विनश्वरता प्रथममेव आयत्तीकरोति इति भावः। "मृत्युर्जन्मवतां वीर! देहेन सह जायते। अद्य वाऽब्दशतान्ते वा मृत्युर्वै प्राणिनां ध्रुवम्॥" इति श्रीमद्भागवतोक्तिरत्र स्मर्तव्या। [अत्र अनित्यतायाः क्रोडीकरणासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरलङ्कारः, स च उपमया अनुप्राणितः]॥८॥

किङ्करः। एहि कुमाल संखचूड़ ! किं ते एदाए भणंतीए ? पुत्तसिणेहमोहिदा क्खु एसा, ण जाणेदि लाअकज्जं। (५)

शङ्ख। अयमागच्छामि।

किङ्करः। [अवलोऽवलोक्य आत्मगतम्] आणीदो क्खु एसो मए वज्झसिलासमीवे, ता वज्झचिह्नं दाइस्सं। (६)

नायकः। इयमसौ योषित्। [शङ्खचूडं दृष्ट्वा] नूनमनेन अस्याः सुतेन भवितव्यम् ; तत् किमाक्रन्दति ? [समन्तात् अवलोक्य] न खल्वस्या भयकारणं किञ्चित् पश्यामि, कुतोऽस्या भयमिति ? यावदुपसर्पामि। प्रसक्त एवायमितेषामालापः, कदाचिदत्र एवास्याभिव्यक्तिः (क) भविष्यति ; तद्विटपान्तरितस्तावत् शृणोमि।

किङ्करः। [सावं कृताञ्जलिः] कुमाल संखचूड़ ! एसो सामिणो आदेसो त्ति कदुअ ईरिसं णिठ्ठुरं मंतीअदि। (७) (ख)

शङ्ख। भद्र ! कथय।

किङ्करः। णागलाआ वासुई आणवेदि—(८)।

---

(५) एहि कुमार शङ्खचूड ! किं ते एतया भणन्त्या ? पुत्रस्नेहमोहिता खल्वेषा, न जानाति राजकार्य्यम्।

(६) आनीतः खल्वेष मया वध्यशिलासमीपे, तत् वध्यचिह्नं दास्यामि।

(७) कुमार शङ्खचूड ! एष स्वामिन आदेश इति कृत्वा ईदृशं निष्ठुरं मन्त्र्यते।

(८) नागराजो वासुकिः आज्ञापयति—।

---

(क) प्रसक्तः निरन्तरं प्रवृत्त इत्यर्थः। अत एव अस्मादालापादेव। अस्य भयकारणस्य, अभिव्यक्तिः प्रकाशः। विटपान्तरितः वृक्षव्यवहितः।

(ख) स्वामिनः नागराजस्य प्रभोः वासुकेः। निष्ठुरं वक्ष्यमाणं "अलंकुणु कुषुमं परिहिअ आरुह वज्झसिलं" इत्येवंरूपं कठोरवचनम्। मन्त्र्यते कथ्यते; मयेति शेषः।

शङ्ख। [शिरस्यञ्जलिं बद्ध्वा सादरम्] किमाज्ञापयति देवः?

किङ्करः।—"एदं रत्तंसुअजुअलं परिहिअ आरुह वज्झसिलं, जेण रत्तंसुअं उवलक्खिअ गलुडो आहालइस्सदि" त्ति। (९)

नायकः। [श्रुत्वा] कथमसौ वासुकिना परित्यक्तः? (प)

किङ्करः। कुमाल! गेण्ह एदं वसणजुअलं। (१०)

[इत्यर्पयति]।

शङ्ख। [सादरम्] उपनय। [गृहीत्वा] शिरसि स्वाम्यादेशः।

वृद्धा। [पुत्रस्य हस्ते वाससी दृष्ट्वा सोरस्ताडम्] हा वच्छ! एदं क्खु वज्जपाडसरिसं (फ) संभावीअदि। (११)

[मोहं गता]।

किङ्करः। आसण्णा गलुडस्स आअमणवेला, (ब) ता लहुं गच्छामि। (१२) [इति निष्क्रान्तः]।

शङ्ख। अम्ब! समाश्वसिहि।

वृद्धा। [समाश्वस्य सास्रम्] हा पुत्तअ! हा मणोरहसदलद्ध! कहिं पुणो तुमं पेक्खिस्सं? (१३)

[कण्ठे गृह्णाति]।

(९) —"इदं रक्तांशुकयुगलं परिधाय आरोह वध्यशिलां, येन रक्तांशुकमुपलक्ष्य गरुड आहारयिष्यति" इति।

(१०) कुमार! गृहाणैतत् वसनयुगलम्।

(११) हा वत्स! इदं खलु वज्रपातसदृशं सम्भाव्यते।

(१२) आसन्ना गरुडस्यागमनवेला, तल्लघु गच्छामि।

(१३) हा पुत्रक! हा मनोरथशतलब्ध! क्व पुनस्त्वां प्रेक्षिष्ये?

(प) परित्यक्तः प्रेरित इत्यर्थः।

(फ) उरस्ताडेन वक्षसि कराघातेन सह वर्तमानं यथा तथा इति सोरस्ताडं, वक्षसि आहत्य इत्यर्थः। वज्रपातसदृशं वज्रपतनतुल्यम्, अतीव दुःखदमिति भावः।

(ब) आसन्ना उपस्थिता। आगमनवेला आगमनसमयः।

नायकः। अहो नैर्घृण्यं (अ) गरुड़स्य ! अपि च—

मूढ़ाया मुहुरश्रुसन्ततिमुचः कृत्वा प्रलापान् बहून्
कस्त्राता तव ? पुत्रकेति कृपणं दिक्षु क्षिपन्त्या दृशम्।
अङ्के मातुरवस्थितं शिशुमिमं त्यक्त्वा घृणामश्नतः
चञ्चुग्रेण खगाधिपस्य हृदयं वज्रेण मन्ये कृतम् ॥ ८ ॥

ब्रह्म। [आत्मनोऽश्रूणि निवारयन्]। अम्ब ! किमतिवैक्लव्येन ? (ब) ननु समाश्वसिहि।

वृद्धा। [सास्रम्]। कहं समस्ससिस्सं ? किं एक्कपुत्तओ त्ति कदुअ साणुकंपेण णाअराएण पेसिदोसि ? हा ! कहं अविच्छिसे जीअलोए मम पुत्तओ सुमरिदो ? (य) सव्वधा अहं म्हि मंदभग्गा। (१४) [मूर्च्छति]।

(१४) कथं समाश्वसिष्यामि ? किमेकपुत्रक इति कृत्वा सानुकम्पेन नागराजेन प्रेषितोऽसि ? हा ! कथमविच्छिन्ने जीवलोके मम पुत्रकः स्मृतः ? सर्वथाऽहमस्मि मन्दभाग्या।

---

(अ) नैर्घृण्यं निर्दयत्वम्।

गरुड़स्य नैर्घृण्यं वर्णयन् आह, मूढ़ाया इति।—मूढ़ाया मोहङ्गतायाः, पुत्रस्नेहेनेति भावः; मुहुः पुनः पुनः, बहून् प्रलापान् कृत्वा अश्रुसन्ततिमुचः वाष्पवारिसमूहं मुञ्चन्त्या इत्यर्थः, "हे पुत्रक ! तव त्राता रक्षिता कः ?" इति, उक्तेति शेषः, कृपणं दीनं यथा तथा, दिक्षु दृशं नयनं, क्षिपन्त्याः प्रेरयन्त्याः, मातुः प्रसूत्याः, अङ्के क्रोड़े, अवस्थितम् इमं शिशुं घृणां दयां, त्यक्त्वा चञ्चुकेण अश्नतः भक्षयतः, खगाधिपस्य गरुड़स्य, हृदयं वज्रेण कृतं निर्मितं, मन्ये तर्कयामि। [अत्र हि गरुड़हृदयस्य वज्रनिर्माणत्वकथने पदैकवाक्यार्थितानि वाक्यानि हेतुः इति काव्यलिङ्गमलङ्कारः, "मन्ये" पदप्रयोगात् उत्प्रेक्षा च इति काव्यलिङ्गोपस्कृतोत्प्रेक्षाऽलङ्कारः। तदुक्तं दर्पणे—"भवेत्सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मना" इति ]। शार्दूलविक्रीडितं वृत्तम् ॥ ८ ॥

(ब) अतिवैक्लव्येन ? कातरताऽऽतिशय्येन।

(य) एकपुत्रक इति।—एक एव पुत्रस्तं ममेति कृत्वा विविच्य, सानुकम्पेन दयावता, नागराजेन किं प्रेषितोऽसि ? [इति आकस्मात्;]। तव प्रेषणं तादृशस्य

नायकः। [सकरुणम्]।—

आर्त्तं कण्ठगतप्राणं परित्यक्तं स्वबन्धुभिः।
त्राये नैनं यदि ततः कः शरीरेण मे गुणः? ॥ १० ॥

तत् यावदुपसर्पामि।

वृद्धः। वत्स! संस्तम्भयात्मानम्। (र)

वृद्धा। हा पुत्तअ! जदा णाअलोअपरिरक्खएण वासुइणा परिच्चत्तोसि, तदा को दे अवरो परित्ताणं करिस्सदि? (१५)

नायकः। [उपसृत्य]। नन्वहमहम्।

वृद्धा। [नायकं दृष्ट्वा सत्वरमुत्तरीयेण पुत्रकमाच्छाद्य नायकम् उपसृत्य जानुभ्यां स्थित्वा]। विणदाणंदण! वावादेहि मं। अहं दे णाअराएण आहारणिमित्तं परिकप्पिदा। (१६)

---

(१५) हा पुत्रक! यदा नागलोकपरिरक्षकेण वासुकिना परित्यक्तोऽसि, तदा कस्ते अपरः परित्राणं करिष्यति?

(१६) विनतानन्दन! व्यापादय माम्, अहं ते नागराजेनाहारनिमित्तं परिकल्पिता।

कृपावतो न युक्तमिति भावः। अविच्छिन्ने विच्छेदरहिते, सातत्ये इत्यर्थः, जीवलोके संसारे। अस्य नागराजेनेति शेषः। आक्षेपोक्तिरियम्।

आर्त्तमिति।—यदि आर्त्तं कातरम्, [आङ्पूर्वस्य ऋ धातोः निष्ठा, ततः "उपसर्गादृति धातौ" (६।१।९१ पा०) इति वृद्धिः] न तु स्वेच्छया स्वशरीरदाने समुपस्थितम् इति भावः; कण्ठगतप्राणं कण्ठं गताः बहिर्गमनोन्मुखाः इत्यर्थः, ["द्वितीयाश्रितातीतपतितगतात्यस्तप्राप्तापन्नैः" (२।१।२४ पा०) इति तत्पुरुषः] प्राणा यस्य तम् आसन्नमृत्युम् इत्यर्थः; स्वबन्धुभिः निजस्वजनैः; निश्चेष्टोऽयमिति भावः, "प्रत्यासन्नो बन्धुः" इति तल्लक्षणात्; परित्यक्तम्; न तु स्वेच्छया आगतमिति भावः, एनं सन्निधिवर्तिनं, न तु दूरस्थमिति भावः, न त्राये न रक्षामि, परदुःखकातरः प्रजारञ्जकः राजपुत्रः अहमिति ध्वनिपादमूलम्; ततस्तदा, मे शरीरेण को गुणः? किं प्रयोजनम्? न कोऽपीत्यर्थः। [अत्र विशेषणानां साभिप्रायत्वात् परिकरालङ्कारः] ॥ १० ॥

(र) संस्तम्भय स्थिरीकुरु।

नायकः। [ सास्रम् ]। अहो ! पुत्रवात्सल्यम् !!—

अस्या विलोक्य मन्ये पुत्रस्नेहेन विक्लवत्वमिदम्।
अकरुणहृदयः करुणां करिष्यति भुजङ्गशत्रुरपि ॥ ११ ॥

शङ्ख। अम्ब ! अलं त्रासेन, न नागशत्रुः। पश्य—

महाऽहिमस्तिष्कविभेदमुक्त-
रक्तच्छटाचर्चितचण्डचञ्चुः।
क्वासौ गरुत्मान् ? क्व च नाम सौम्य-
स्वभावरूपाकृतिरेष साधुः ? ॥ १२ ॥

वृद्धा। अहं क्खु तुज्झ मरणभीआ सव्वं ज्जेव्व लोअं गरुड-मअं पेक्खामि। ( १० )

( १० ) अहं खलु तव मरणभीता सर्वमेव लोकं गरुडमयं प्रेक्षे।

अस्या इति।—अस्याः नागमातुः, पुत्रस्नेहेन हेतुना इदं विक्लवत्वं कातरत्वं, विलोक्य अकरुणहृदयः निर्दयचेताः, भुजङ्गानां शत्रुः गरुडोऽपि, करुणां दयां, करिष्यति, मन्ये सम्भावयामि। [ उत्प्रेक्षाऽलङ्कारः ]। आर्या वृत्तम् ॥ ११ ॥

पार्थक्यं दर्शयति, महेति।—महताम् अहीनां नागानां, मस्तिष्कस्य मस्तुलुङ्गस्य, शिरःस्थितघृताकारपदार्थविशेषस्येत्यर्थः, शिरस्थानुद्देशस्येति यावत्, विभेदात् स्फोटनात्, मुक्तानां निर्गलितानां, रक्तानां रुधिराणां, छटाभिः प्रभाभिः, चर्चिता रञ्जिता, रक्तीकृता इत्यर्थः, चण्डा भीषणा, चञ्चुः यस्य तादृशः, ( क्वचित् "चञ्चुः" इत्यत्र "चक्षुः" इति पाठो दृश्यते ; तत्र रक्तच्छटानां चक्षुषोरध्यासादधिकलौहित्यं जातमिति भावः अवगन्तव्यः ) असौ गरुत्मान्, [ गरुत् पक्षवाची शब्दः, तस्मान्मतुप्। अस्त्यर्थप्रत्यये परे तकारान्तशब्दस्य पदत्वाभावात् प्रत्यय-मकारत्वेऽपि तकारस्य नकाराभावः ] क्व ? सौम्यः सुन्दरः, स्वभावः रूपम् आकृतिश्च यस्य तादृशः, एषः साधुश्च क्व नाम ? ( नाम इति विस्मयसूचकमव्ययं, "नाम कोपेऽभ्युपगमे विस्मये स्मरणेऽपि च" इति मेदिनी )। क्व-द्वयं महदन्तरं सूचयति। [ अत्र तादृशगरुत्मत्त्वस्य तादृशसाधुत्वस्य च एकस्मिन् वस्तुनि अत्यन्तमसम्भावितत्वेन विरुद्धयोः संयोजनात् विषमालङ्कारः ]। इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिः वृत्तम् ॥ १२ ॥

नायकः। अम्ब! किं पुनःपुनरभिहितेन, ननु कार्य्येणैव सम्पादयामि। (ख)

वृद्धा। [शिरःकम्पं कृत्वा]। पुत्तअ! चिरं जीअ। (१८)

नायकः।—

ममैतदर्प्पय वध्यचिह्नं
प्रावृत्य यावद्विनताऽऽत्मजाय।
पुत्रस्य ते जीवितरक्षणाय
स्वदेहमाहारयितुं ददामि॥ ११॥

वृद्धा। [कर्णौ पिधाय]। पडिहदं क्खु एदं; तुमं वि संखचूडणिव्विसेसो (ग) पुत्तो। अहवा संखचूडादो वि अहिअअरो, जो एव्वं बंधुजणपरिच्चत्तं वि पुत्तअं मे सरीरपदाणेण रक्खिदुमिच्छसि। (१९)

---

(१८) पुत्रक! चिरं जीव।

(१९) प्रतिहतं खल्वेतत्; त्वमपि शङ्खचूडनिर्विशेषः पुत्रः, अथवा शङ्खचूडादप्यधिकतरः य एवं बन्धुजनपरित्यक्तमपि पुत्रकं मे शरीरप्रदानेन रक्षितुमिच्छसि।

---

(ख) कार्य्येणैव कार्य्येणैव। सम्पादयामि करोमि, तव पुत्रस्य परित्राणमिति शेषः।

सङ्कल्पं वर्णयति, ममेति।—अम्ब! हे मातः!, वध्यचिह्नम् एतत् रक्तवस्त्रयुगलमिति यावत्, रक्ताम्बरादिपरिधानस्यैव वध्यचिह्नत्वात्, मम अर्पय देहि, [अत्र "रजकस्य वस्त्रं ददाति" इतिवत् क्रियायोगे षष्ठी] यावत् येनेत्यर्थः, प्रावृत्य आच्छाद्य, आत्मानमिति शेषः, ते तव, पुत्रस्य जीवितरक्षणाय विनताऽऽत्मजाय गरुत्मते, स्वदेहम् आहारयितुं खादयितुं ददामि। अत्र प्रसादगुणः, उपजातिः वृत्तम्॥ ११॥

(ग) प्रतिहतं प्रतिनिवर्त्तितं, भवतु इति शेषः; यदमङ्गलमादावुक्तं, तदेव गतं भवतु, तदेव हृदये तिष्ठतु, पुनः मा प्रकाशय इति भावः। शङ्खेति।—शङ्खचूडात् निर्नास्ति विशेषो यस्य सः शङ्खचूडतुल्य इत्यर्थः।

अहह। अहो !! जगद्विपरीतमस्य महासत्त्वस्य (अ) चेतः। कुतः ?—

विश्वामित्रः श्वमांसं श्वपच इव पुराऽभक्षयत् यन्निमित्तं
नाडीजङ्घो निजघ्ने कृततदुपकृतिर्यत्कृते गौतमेन ।
पुत्रोऽयं काश्यपस्य प्रतिदिनमुरगानत्ति तार्क्ष्यो यदर्थं
प्राणास्तानेष साधुस्तृणमिव कृपया यः परार्थे ददाति ॥१४॥

[ नायकमुद्दिश्य ]। भो महासत्त्व ! त्वया दर्शिता एव आत्मप्रदानव्यवसायनिर्व्याजा मयि कृपालुता, तदलमनेन निर्बन्धेन । (ब) पश्य—

(अ) महासत्त्वस्य महाप्राणस्य महोत्साहस्य वा ।

प्राणधारणे सर्वैरेव यत्नः क्रियते, अयन्तु तद्विपरीतमाचरति इति सदृष्टान्तमाह, विश्वामित्र इति ।—विश्वस्य मित्रं [ "मित्रे चर्षौ" (६।३।१३० पा०) इति पूर्वपदस्य दीर्घः, पुंस्त्वमभिधानात् ] विश्वामित्रः पुरा पूर्वस्मिन् काले, श्वपच इव चाण्डाल इव, यन्निमित्तं येषां प्राणानां रक्षणार्थमित्यर्थः, श्वमांसं कुक्कुरजघनमांसमित्यर्थः, अतीवाशिष्टमपीति भावः, अभक्षयत्, तदुक्तं मनुना—"क्षुधार्त्तश्चात्तुमभ्यागात् विश्वामित्रः श्वजाघनीम् । चाण्डालहस्तादादाय धर्माधर्मविचक्षणः ॥" इति ; गौतमेन मुनिना, कृता तस्य गौतमस्य, उपकृतिरुपकारो येन तथोक्तः, कृतज्ञताप्रकाशस्य पात्रमपीति भावः ; नाडीजङ्घः तदाख्यो मुनिविशेषः, यत्कृते येषां प्राणानां कृते रक्षणार्थमित्यर्थः, निजघ्ने निहतः ; काश्यपस्य प्रजासृष्टिकारकस्य इति भावः, पुत्रः अयं तार्क्ष्यः गरुत्मान्, यदर्थं येषां प्राणानां रक्षणार्थं, प्रतिदिनम् उरगान् नागान्, अत्ति भक्षयति, तान् प्राणान्, परार्थे परप्राणरक्षार्थं, न तु कस्यचित् सम्बन्धिनः इति भावः ; स एष साधुः कृपया तृणमिव ददाति ; अत्र तस्य इति पदमध्याहार्य्यम् ; तस्मादस्य महासत्त्वस्य चेतो जगद्विपरीतमहो ! इति गद्योक्तेनान्वयः । [ अत्र हि तार्क्ष्य-गौतम-विश्वामित्राः सर्वे एव निजजीवन-रक्षार्थमकार्य्यमनुष्ठितवन्तः, अयन्तु परप्राणरक्षार्थं निजप्राणपरित्यागरूपसत्कार्य्यं कर्त्तुकामः, इति उपमानभूतेभ्यो विश्वामित्रादिभ्यः उपमेयस्य नायकस्य आधिक्यात् व्यतिरेकालङ्कारः, स च उपमया सङ्कीर्णः ]। स्रग्धरा वृत्तम् ॥ १४ ॥

(ब) आत्मेति।—आत्मनः स्वदेहस्य, प्रदाने यो व्यवसायः सङ्कल्पः, तेन निर्व्याजा अकपटा । निर्बन्धेन आग्रहेण ।

जायन्ते च म्रियन्ते च मादृशाः क्षुद्रजन्तवः ।
परार्थे बद्धकक्ष्याणां त्वादृशामुद्भवः कुतः ? ॥ १५ ॥

तत् किमनेन निर्बन्धेन ? मुच्यतामयमध्यवसायः । (च)

नायकः । शङ्खचूड ! न मे चिराल्लब्धावसरस्य अस्य परार्थसम्पादनमनोरथस्यान्तरायं कर्तुमर्हसि, तदलं विकल्पेन ; (छ) दीयतामेतत् वध्यचिह्नम् ।

शङ्ख । भो महासत्त्व ! किमनेन वृथाऽऽत्मायासेन ? न खलु शङ्खधवलं शङ्खपालकुलं शङ्खचूडो मलिनीकरिष्यति । यदि ते वयमनुकम्पनीयाः, तदा इयमस्मद्विपत्तिविक्लवा न यथा जीवितं जह्यात्, तथाऽभ्युपायः (ज) चिन्त्यताम् ।

नायकः । किमत्र चिन्त्यते ? (झ)—

---

नायकोत्कर्षं दर्शयति, जायन्त इति ।—मादृशाः मादृशाः, क्षुद्रजन्तवः नीच-प्राणिनः, जायन्ते च उत्पद्यन्ते च, म्रियन्ते च पञ्चत्वमायान्ति च, परार्थे परस्वार्थे, बद्धकक्ष्याणां बद्धपरिकराणां, सन्नद्धानामित्यर्थः, त्वादृशां त्वत्सदृशानाम्, उद्भवः कुतः ? न कुत्रापि त्वादृशा उद्भवन्तीत्यर्थः । [ अत्र उपमानोपमेयभावापन्नयोः नायक-शङ्खचूडयोरेकतरस्य उत्कर्षवर्णनात् व्यतिरेकालङ्कारः, तादृशव्यक्तीनामुद्भवसम्बन्धेऽपि तदसम्बन्धोक्तेरतिशयोक्तिश्च इत्यनयोः सङ्करः ॥ १५ ॥

(च) अध्यवसायः उद्योगः ।

(छ) चिरात् दीर्घकालात्, परमिति शेषः, लब्धावसरस्य प्राप्तकालस्य । परार्थेति ।—परार्थस्य परकार्यस्य, सम्पादनायां निर्वहणे, यः मनोरथः अभिलाषः तस्य । अन्तरायं विघ्नम् । विकल्पेन अन्यथाकल्पनेन ।

(ज) वृथेति ।—वृथा निरर्थकः, यः आत्मायासः स्वप्रयत्नः तेन । शङ्खधवलं शङ्खवत् श्वेतं, निष्कलङ्कमित्यर्थः । शङ्खपालकुलं शङ्खपालस्य शङ्खचूडजनकस्य, कुलं वंशम् । मलिनीकरिष्यति कलङ्कितं करिष्यति ; परप्राणविनिमयेन निजप्राणरक्षणरूपायशस्करकार्यकरणेनेति भावः । अस्मदिति ।—अस्माकं विपत्त्या विक्लवा विह्वला । इयं मम वृद्धा माता । यथा यादृशेनोपायेन । जीवितं जीवनम् । न जह्यात् न परित्यजेत् । तथा तादृशः । अभ्युपायः सम्यक् उपायः ।

(झ) चिन्त्यते ध्यायते, मयेति शेषः ।

म्रियते म्रियमाणे या त्वयि जीवति जीवति ।
तां यदीच्छसि जीवन्तीं रक्षात्मानं ममासुभिः ॥ १६ ॥

अयमभ्युपायः । तदर्पय त्वरितं वध्यचिह्नं, यावदनेन आत्मानं प्रच्छाद्य वध्यशिलामारोहामि ; त्वमपि जननीं पुरस्कृत्य अस्मात् देशान्निवर्त्तस्व ; कदाचिदम्बा आलोक्य घातस्थानं सन्निकृष्टं स्त्रीस्वभावकातरत्वेन जीवितं जह्यात् । किं न पश्यति भवानिदं विपन्नपन्नगानेककङ्कालसङ्कुलं महाश्मशानम् ? (ग) तथा हि—

चञ्चच्चञ्चूकृत्तच्युतपिशितलवग्राससंवृद्धगर्धैः
गृध्रैराबद्धपक्षद्वितयविधुतिभिर्बद्धसान्द्रान्धकारे ।

---

चिन्तानिवारणस्य उपायं विवृणोति, म्रियत इति ।—या ते माता, त्वयि म्रियमाणे पञ्चत्वं गच्छति सति, म्रियते प्राणान् त्यजति, त्वयि जीवति सति जीवति, तां तव मातरमित्यर्थः, यदि जीवन्तीं प्राणैरवियोजयन्तीम्, इच्छसि, तदा मम असुभिः प्राणैः, प्राणविनिमयेनेत्यर्थः, आत्मानं निजजीवनं, रक्ष ॥ १६ ॥

(ग) अयमभ्युपायः, तव मातुः प्राणरक्षणे इति शेषः । वध्यचिह्नं वध्यलक्षणं रक्तवस्त्रयुगलमित्यर्थः । प्रच्छाद्य आवृत्य, [प्र-पूर्वात् छद धातोः णिचि क्त्वो ल्यप्] पुरस्कृत्य अग्रे कृत्वा । अस्मात् देशात् अस्मात् स्थानात् । निवर्त्तस्व प्रतिगच्छ । अम्बा माता । घातस्थानं वध्यभूमिम् । सन्निकृष्टं समीपवर्त्ति । स्त्रीस्वभावकातरत्वेन नारीप्रकृतिसुलभाधैर्य्येण । विपन्नेति ।—विपन्नानां मृतानां, पन्नगानां नागानाम्, अनेकैः बहुभिः, कङ्कालैः शरीरास्थिभिः, ("काष्ठवीरास्थि कङ्कालः" इत्यमरः) सङ्कुलं व्याप्तम् । शमानः शवाः, शेरते अत्र इति श्मशानं, [पृषोदरादित्वात् साधु] महाश्मशानं "श्मन्शब्देन शवः प्रोक्तः शानं तत्स्थानमुच्यते" इति निरुक्तकं भीषणं प्रेतस्थानम् ।

महाश्मशानं वर्णयति, चञ्चदिति ।—चञ्चता चलता, चञ्चोरपेव, गृध्रस्येति शेषः, कृत्तं छिन्नं सत्, च्युतं भ्रष्टं, यत् पिशितं मांसं, तस्य लवस्य खण्डस्य, ग्रासे भक्षणे, संवृद्धः वृद्धिं गतः, गर्धः लिप्सा येषां तादृशैः, मांसखण्डलोलुपैरित्यर्थः. आबद्धाः प्रतिबद्धाः, निरन्तरभावेनोपविष्टत्वात् मिलिता इत्यर्थः, पक्षद्वितयस्य पक्षद्वयस्य, ["संख्याया अवयवे तयप्" (५।२।४२ पा०) इति तयप्] विधुतयः कम्पनानि, सञ्चालनानि इत्यर्थः,

वक्त्रोद्वान्ताः पतन्त्यः भ्रमितशिखिशिखाश्रेणयोऽस्मिन् शिवानाम्
अस्रस्रोतस्स्रुतिबहुलवसावासविस्रे स्वनन्ति ॥ १७ ॥

शङ्ख। कथं न पश्यामि—

प्रतिदिनमहिनाहारेण विनायकाहितप्रीति ।
शशिधवलास्थिकपालं वपुरिव रौद्रं श्मशानमिदम् ॥१८॥

---

येनादृशैः ; यद्वा—आबद्धाः आप्ताः, आरचिता इति यावत्, पक्षविततस्य विधूतयः येनादृशैः, गृध्रैः श्मशानीयपक्षिविशेषैः, बद्धः उत्कटितः, सान्द्रः घनः, अन्धकारो यस्मिन् तादृशे, तथा अजस्रा अविरता, स्रुतिः स्रावो यासां तथाभूतानां, बहुलानां प्रभूतानां, वसानां मेदसां, वासेन गन्धेन, विस्रे आमगन्धिनि, ("विस्रं स्यादाम-गन्धि यत्" इत्यमरः) अस्मिन् श्मशाने, अस्राणां रुधिराणां, स्रोतसि प्रवाहे, [बहुव्रीहिणा श्मशानविशेषणम्] शिवानां शृगालानां, वक्त्रेभ्यः मुखेभ्यः, उद्वान्ताः उद्गीर्णाः सत्यः, पतन्त्यः, अत एव भ्रमिताः असम्बद्धतया निर्वाणं गमिताः, शिखिनाम् अग्नीनाम् ; मुखज्वलितानामिति भावः ; शिखाश्रेणयः स्वनन्ति शब्दायन्ते, वसादिद्रवपदार्थेषु पतिताः सत्यः चटचटाशब्दं कुर्वन्तीत्यर्थः। अथेदं बोध्यम् ;— शिवावक्त्रोत्थाग्नीनां रात्रावेव परिदृश्यमानत्वात् दिवा तद्दर्शनासम्भवेऽपि गृध्रनिचयैः श्मशानभूमेः निविडान्धकारवत्त्वेन रात्रिवत् प्रतीयमानत्वात् तद्दर्शनं सङ्गच्छते। [अत्र "अजस्रस्रु, शिखिशिखा, वसावास" इत्यादिव्यञ्जनसङ्घाना सन्निवेशादनुप्रासः, तथा दिवाऽपि सान्द्रान्धकारवत्त्वेन रात्रिवत् प्रतीयमानत्वात् गम्योत्प्रेक्षा, सा च प्रस्तुतश्मशानवर्णनस्य स्वाभाविकत्वात् स्वभावोक्त्याऽनुप्राणितः, इत्यनयोः सापेक्षत्वेन स्थितेः सङ्करः अनुप्रासेन सह नैरपेक्ष्यात् संसृष्टिश्च] स्रग्धरा वृत्तम् ॥ १७ ॥

नायकोक्तिं समर्थयमानः शङ्खचूडोऽपि महाश्मशानस्य भीषणत्वं प्रतिपादयति, प्रतिदिनमिति।—दिने दिने इति प्रतिदिनं, [वीप्सार्थेऽव्ययीभावः] आहारेण भोजनेन, भुक्तेन इति यावत्, अहिना सर्पेण, सर्पाख्यभक्ष्यद्रव्येणेति यावत्, अन्यत्र—हारेण माल्यभूतेन, अहिना उपलक्षितं, रुद्रस्य अहिभूषणत्वात्, [उभयत्र इत्थम्भूतलक्षणे तृतीया] विनायकाहितप्रीति वीनां पक्षिणां, ("शकुन्ति-पक्षिशकुनि...।...वि-विष्किर-पतत्रयः" इत्यमरः) नायकस्य स्वामिनः, विनायकस्य गरुडस्य, आहिता आपिता, प्रीतिः यत्र ; आहिता अर्पिता, प्रीतिर्येन इति वा तादृशं, नित्यमीप्सितभोजनलाभादिति भावः ; अन्यत्र—विनायकस्य गणाधिपस्य, गणेशस्येत्यर्थः, ("विनायको विघ्नराजद्वैमातुरगणाधिपाः" इत्यमरः) आहिता

नायकः। शङ्खचूड! तत् गच्छ, किमेभिः सामोपन्यासैः? (च)

शङ्ख। आसन्नः (ङ) खलु गरुडस्यागमनसमयः। [मातुरचरणौ जानुभ्यां स्थित्वा]। अम्ब! त्वमपि निवर्तस्वेदानीम्।

समुत्पत्स्यामहे मातर्यस्यां यस्यां गतौ वयम्।
तस्यां तस्यां प्रियसुते! माता भूयास्त्वमेव नः॥ १८॥

[पादयोः पतति]।

---

प्रीतिर्येन; विनायकाय आहिता प्रीतिर्येन इति वा; विनायकेन आहिता कृता, प्रीतिर्यस्येति वा विग्रहः, तादृशं, तस्य रुद्रात्मजत्वादिति भावः; शशिधवलास्थिकपालं शशिवत् चन्द्रवत्, धवलानि शुभ्राणि, अस्थ्नां कपालानि शकलाः, समूहा इत्यर्थः; यद्वा—अस्थीनि देहास्थीनि, कपालानि शिरोस्थीनि; यद्वा—शशिधवलानि अस्थीनि, कपालानि च भग्नघटादिशकलानि च यत्र; ("कपालोऽस्त्री शिरोऽस्थ्नि स्यात् घटादेः शकले व्रजे" इति मेदिनी) अथवा—शशिना चन्द्रेण, शेखरस्थेनेति भावः; धवलानि स्वतःशुभ्रत्वेऽपि चन्द्रसम्पर्कादतीव शुभ्राणीत्यर्थः, अस्थीनि देहास्थीनि, माल्यभूतानीति यावत्, कपालानि शिरोऽस्थीनि, भिक्षापात्रभूतानीति यावत्; रुद्रस्य अस्थिमालित्वात् कपालभृत्त्वाच्चेति भावः; शशिधवलम् अस्थि शिरोऽस्थि एव, कपालं भिक्षापात्रभूतं यस्य इति वा तादृशं, यद्वा—अस्थीनि कपालानि च तेषां समाहारः अस्थिकपालं, धवलम् अस्थिकपालं धवलास्थिकपालं, शशी चन्द्रमाः, तथा धवलास्थिकपालं यत्र तत् तथाभूतम्, अत एव रौद्रं भयानकम्, इदं श्मशानं, रुद्रस्येदं रौद्रं शैवं, वपुरिव शरीरमिव, विभातीति शेषः। [अत्र श्लेषमूलोपमाऽलङ्कारः]। आर्या वृत्तम्॥ १७॥

(च) सामोपन्यासैः सान्त्वनावचनप्रयोगैः, किम्? व्यर्थम्। [वारणार्थक किं-शब्दयोगे तृतीया] मम जीवनत्यागनिवारणार्थं ते सानुनयवचनं निष्फलमेव, नाहं निजव्यवसायात् निवर्तिष्ये इति तात्पर्यम्।

(ङ) आसन्नः सन्निहितः।

समुत्पत्स्यामहे इति।—हे प्रियसुते! प्रियः सुतो यस्याः तथाभूते प्रियपुत्रे!, मातः! वयम् ["अस्मदो द्वयोश्च" (१।२।५९ पा०) इति बहुवचनात् एकत्वेऽपि बहुवचनम्] यस्यां यस्यां गतौ दशायां, देव-नर-पशु तिर्यगादिदशायामित्यर्थः; देवादियोनाविति

वृद्धा। [सास्रम्]। कहं अपच्छिमवअणं? पुत्तअ! ण क्खु तुमं उज्झिअ मे पाआ अण्णदो वहंति, ता इध ज्जेव्व तुए सह चिट्ठिस्सं। (२०) (च)

भृत्यः। [उत्थाय]। जवादहमपि अदूरे भगवन्तं दक्षिणगोकर्णं प्रदक्षिणीकृत्य स्वाम्यादेशमनुतिष्ठामि। (छ)

[उभौ निष्क्रान्तौ]।

नायकः। [हृष्टः सहर्षमात्मगतम्]। दिष्ट्या सिद्धमभिवाञ्छितम् अनेन अतर्कितोपनतेन रक्तांशुकयुगलेन। (ज)

---

(२०) कथमपश्चिमवचनम्? पुत्रक! न खलु त्वाम् उज्झित्वा मे पादौ अन्यतो वहतः, तदिहैव त्वया सह स्थास्यामि।

---

भाव:; ("गतिः स्त्री मार्गदशयोः ज्ञाने यात्राऽभ्युपाययोः। नाडीव्रणे सरण्यां च" इति मेदिनी) समुत्पत्स्यामहे जनिष्यामहे, तस्यां तस्यां गतौ, त्वमेव नः अस्माकं, माता जननी, भूयाः भव, ["लिङाशिषि" (३।४।११६पा०) इति लिङ्। इष्टाशंसनमाशीः इति। अत्र अप्रस्तुतः कथितात् "त्वमेव माता भूयाः" इति वस्तुनः अर्थतः तावतो जन्मजननीत्वपोषणात् परिसङ्ख्यानामालङ्कारः] ॥ १९ ॥

(च) अपश्चिमवचनं नास्ति पश्चिमं पश्चात् यस्मात् तादृशं, वचनं वाक्यं, यद्वाक्यात् परमन्यत् वाक्यं नास्ति, एतादृक् कठोरवचनमित्यर्थः, "निवर्तस्व" इत्यादिरूपमन्त्याशिवचनमिति यावत्, कथं केन प्रकारेण, वदसि? इति शेषः। उज्झित्वा परित्यज्य। अन्यतः अन्यत्र। [सप्तम्यास्तसिल्] वहतः चलतः इत्यर्थः।

(छ) जवात् वेगात्, [ल्यब्लोपे पञ्चमी] सवेगं गत्वा इत्यर्थः। दक्षिणगोकर्णं तदाख्य शिवलिङ्गमित्यर्थः। प्रदक्षिणीकृत्य परिक्रम्य। स्वाम्यादेशं स्वामिनः प्रभोः नागराजस्य, आदेशम्। अनुतिष्ठामि पालयामीत्यर्थः।

(ज) हृष्टः रक्तवस्त्रं गृहीत्वा आगच्छन्तं कञ्चुकिनं दूरतो विलोक्य। दिष्ट्या भाग्येन, हर्षसूचकमव्ययमिदम्; हर्षश्च आत्मजीवनविसर्जनेन शङ्खचूडजीवनरक्षणरूपपरोपकारकरणसुयोगलाभात्। सिद्धं सफलं जातम्। अतर्कितोपनतेन अकस्मादुपस्थितेन। रक्तांशुकयुगलेन [illegible] [illegible]चिह्नितेनेति यावत्।

कञ्चुकी। [प्रविश्य]। इदं वासोयुगं देव्या मित्रावसुजनन्या कुमाराय प्रेषितम्; तदेतत् परिधत्तां कुमारः।

नायकः। [सादरम्]। उपनय। (झ)

कञ्चुकी। [उपनयति]।

नायकः। [गृहीत्वा आत्मगतम्]। सफलीभूतो मे मलयवत्याः पाणिग्रहः। [प्रकाशम्]। कञ्चुकिन्! गम्यतां, मद्वचनादभिवादनीया देवी। (ञ)

कञ्चुकी। यदाज्ञापयति कुमारः। [इति निष्क्रान्तः]।

नायकः।—

वासोयुगमिदं रक्तं प्राप्ते काले समागतम्।
महतीं प्रीतिमाधत्ते परार्थे देहमुज्झतः॥ २०॥

[दिशोऽवलोक्य]। यथाऽयं चलितमलयाचलशिलासञ्चयः प्रचण्डो नभस्वान्, तथा तर्कयामि, आसन्नीभूतः (ट) खलु पक्षिराज इति। तथा हि—

---

(झ) उपनय प्रापय, देहीति यावत्।

(ञ) सफलीभूतः सफलः सञ्जातः, परोपकारकरणे सहायभूतत्वादिति भावः। पाणिग्रहः पाणिपीडनं, परिणयः इत्यर्थः; इदानीं यदि मलयवत्या सह मम विवाहो नाभविष्यत्, तदा कुतः रक्तवस्त्रयुगलम् अवाप्स्यम् इति भावः। अभिवादनीया प्रणम्या। देवी श्वश्रूमाता इति यावत्।

वासोयुगमिति।—प्राप्ते काले उपयुक्तसमये, समागतं समासादितं, देवादुपस्थितमिति यावत्, इदं रक्तं वासोयुगं वस्त्रयुगलं, परार्थे परोपकाराय, देहम् उज्झतः त्यजतः, मम इति शेषः, महतीं प्रीतिम् आधत्ते जनयति। [अत्र दैवात् वस्त्रयुगलरूपवस्तुनः आगमात् परार्थे देहत्यागरूपकार्यस्य सुकरत्वद्योतनात् समाधिरलङ्कारः; यथा दर्पणे—"समाधिः सुकरं कार्य्यं दैवात् वस्त्वन्तरागमात्" इति]॥ २०॥

(ट) चलितेति।—चलितः स्थानात् भ्रंशितः, मलयाचलस्य शिलासञ्चयः शिलासमूहः येन तथाभूतः, प्रचण्डः महान्, नभस्वान् वायुः, ("नभस्वद्वातपवनपव-

तुल्याः संवर्त्तकाभ्रैर् विदधति गगनं पङ्क्तयः पक्षतीनां
तीरे वेगानिलोऽब्धेः क्षिपति भुव इव प्लावनायाम्बुराशीः ।
कुर्वन् कल्पान्तशङ्कां सपदि च सभयं वीक्षितो दिग्द्विपेन्द्रैः
देहोद्योतैर्दिशाऽऽशाः कपिशयति मुहुर्द्वादशादित्यदीप्तिः ॥२१॥

नागपभस्मनाः" इत्यमरः ) प्रयातीति शेषः । तर्कयामि मन्ये । आसन्नीभूतः समीपवर्त्ती सञ्जातः, समागतप्राय इत्यर्थः ।

गरुडागमनं वर्णयति, तुल्या इति ।—संवर्त्तकाभ्रैः संवर्त्त एव संवर्त्तकः प्रलयः, ("संवर्त्तः प्रलयः कल्पः क्षयः कल्पान्तः इत्यपि" इत्यमरः ) तत्र यानि अभ्राणि मेघाः तैः, प्रलयकालिकमेघैरित्यर्थः ; यद्वा—संवर्त्तकाख्यमेघैः, तुल्याः समाः, ("आवर्त्तश्चैव संवर्त्तः पुष्करो द्रोण एव च" इति चत्वारो मेघाः । तेषां मध्ये "संवर्त्तश्च महद्दकः" इति ज्योतिषोक्तत्वात् सकलजलदाभाः इति सूच्यते, पक्षतीनां पक्षमूलानां, पक्षाणामित्यर्थः, ("पक्षतिस्तु भवेत् पक्षमूले च प्रतिपत्तिथौ" इति मेदिनी ) पङ्क्तयः श्रेणयः, गगनं विदधति आच्छादयन्ति, इवेत्यध्याहार्य्यम् । [ अपि पूर्व्वकाद्दधाति रूपम्, अनेरकारलुक् ] वेगानिलः वेगवान् वायुः, पक्षास्फालनोत्थ इति भावः, भुवः क्षितेः, प्लावनाय इव समन्तात् निमग्नीकरणाय इव, अम्बुराशीः समुद्रान्, अब्धेः तीरे तटदेशे, क्षिपति सवेगं प्रेरयति, अत एव सपदि सहसा, कल्पान्तशङ्कां प्रलयसन्देहं, कुर्वन् जनयन्, तथा दिग्द्विपेन्द्रैः दिग्गजैः, मुहुः पुनः पुनः, सभयं वीक्षितः दृष्टश्च, द्वादशादित्यदीप्तिः द्वादशसूर्य्यसमप्रभः, अतितेजस्वी इति भावः ; गरुत्मान् इत्यध्याहार्य्यं, देहस्य उद्योतैः प्रभाभिः, दिशः आशाः दिशः, कपिशयति कपिशाः श्यावाः, कृष्णपीतमिश्रवर्णा इत्यर्थः, तादृशीः करोति, संवर्त्तकाभ्र-तुल्यानां पक्षतीनां प्रभया दिशां कृष्णत्वं द्वादशादित्यवद्देहप्रभया च पीतत्वम्, अत एव मिश्रवर्णोदितयप्रभया दिशां कपिशत्वमवगन्तव्यम् ; यत्तु "कपिशयति पिङ्गलयति" इति केनाचित् व्याख्या, तत्तु न समीचीनम् ; ("श्यावः स्यात् कपिशः" इत्यमरोक्तेः ) "कपिलयति" इति पाठकल्पने वा व्याख्या सङ्गच्छते इति । [ कपिश शब्दात् "तत्करोति—" ( ग० ) इति णिच् । अत्र प्रथम-द्वितीयपादे उत्प्रेक्षा, तृतीये च दिग्गजानां कल्पान्तशङ्कया सभयवीक्षणासम्बन्धेऽपि तत्सम्बन्धोक्त्या अतिशयोक्तिः, चतुर्थपादे द्वादशादित्यदीप्तिरित्युपमा च, इत्येतेषामङ्गाङ्गिभावेन स्थितेः सङ्करः ] । स्रग्धरा वृत्तम् ॥ २१ ॥

तत् यावदसौ नागच्छेत् शङ्खचूड़ः, तावत् त्वरिततरमिमां वध्यशिलामारोहामि। [तथा कृत्वा उपविश्य स्पर्शं नाटयति]। अहो स्पर्शोऽस्याः!! (ठ)—

न तथा सुखयति मनो मलयवती मलयचन्दनरसाऽऽर्द्रा।
अभिवाञ्छितार्थसिद्धै वध्यशिलेयं यथाऽऽश्लिष्टा॥ २२॥

अथवा किं मलयवत्या? (ड)—

शयितेन मातुरङ्के विस्रब्धं शैशवे न तत् प्राप्तम्।
लब्धं सुखं मयाऽस्या वध्यशिलाया यदुत्सङ्गे॥ २३॥

तदयमागतो गरुत्मान्. यावदात्मानमाच्छादयामि। (ढ)

[तथा करोति]।

(ठ) स्पर्शः, वध्यशिलायाः इति भावः। नाटयति नाट्येन प्रदर्शयतीत्यर्थः; अस्याः शिलायाः।

स्पर्शसुखं वर्णयति, नेति।—मलयचन्दनरसेन द्रवश्वेतचन्दनेन, तथाविधचन्दनलेपनेनेत्यर्थः, आर्द्रा सिक्ता, सुशीतलाङ्गीत्यर्थः, मलयवती आश्लिष्टा आलिङ्गिता सती, तथा मनो न सुखयति सुखीकरोति, अभिवाञ्छितस्य ईप्सितस्य, अर्थस्य प्रयोजनस्य, परप्राणरक्षणरूपस्य इत्यर्थः, सिद्धै साफल्याय, आश्लिष्टा आलिङ्गिता, इयं वध्यशिला यथा, सुखयतीति शेषः। [अत्र उपमानभूतायां मलयवत्या अपि उपमेयरूपाया वध्यशिलायाः सुखप्रदत्वेन आधिक्यकथनात् व्यतिरेकालङ्कारः]। आर्या वृत्तम्॥ २२॥

(ड) किं मलयवत्या? मलयवतीस्पर्शसुखोपमानवर्णनेनालमित्यर्थः; ततोऽपि यदधिकसुखप्रदम्, एतत्सुखतुलनायां तस्यापि अकिञ्चित्करत्वादिति भावः।

शयितेनेति।—अस्याः वध्यशिलायाः उत्सङ्गे क्रोड़े, शयितेन मया यत् सुखं लब्धं प्राप्तं, शैशवे बाल्ये, मातुः अङ्के क्रोड़े, विस्रब्धं निःशङ्कं यथा तथा, शयितेन सुप्तेन, तत् सुखं, न प्राप्तं न अधिगतम्। [अत्रापि पूर्ववत् व्यतिरेकालङ्कारः]। आर्या वृत्तम्॥ २३॥

(ढ) गरुत् पक्षः अस्यास्तीति गरुत्मान् गरुडः। (प्रशंसायां मतुप्। "गरुत्मान् गरुडस्तार्क्ष्यो वैनतेयः खगेश्वरः" इत्यमरः) आच्छादयामि आवृणोमि, वस्त्राञ्चलयुगलेनेति शेषः।

[ ततः प्रविशति गरुडः ] ।

गरुडः ।—

दृष्ट्वा बिम्बं हिमांशोर्भयचकितवलयां संस्मरन् शेषमूर्त्तिं
सानन्दं स्यन्दनाश्वत्रसनविचलिते पूष्णि दृष्टोऽग्रजेन ।
एष प्रान्तावसज्जज्जलधरपटलैरायतीभूतपक्षः
प्राप्तो वेलामहीध्रं मलयमहमहिग्रासगृध्नुः क्षणेन ॥ २४ ॥

स्वागमनमाहात्म्यमाह गरुडः, दृष्ट्वेति ।—हिमांशोः चन्द्रस्य, बिम्बं मण्डलं, ("बिम्बोऽस्त्री मण्डलं त्रिषु" इत्यमरः) दृष्ट्वा अवलोक्य भयेन, मम इति शेषः, चकितं सम्भ्रान्तमित्यर्थः, वलय मण्डलाकारेणावस्थानं यया तादृशीं, शेषस्य अनन्तनागस्य, अतिशुभ्रस्येति भावः; मूर्त्तिं तनुं, ("स्त्रियां मूर्त्तिस्तनुस्तनूः" इत्यमरः) संस्मरन् स्मृति-विषयीभूतां कुर्वन्; अतिशुभ्रं वलयाकारञ्च चन्द्रमण्डलं दृष्ट्वा चन्द्रबिम्बवत् शुभ्रस्य भयेन सङ्कुचिततया वलयाकारेण अवस्थितस्य च शेषनागस्य स्मरणं बोद्धव्यम्; तथा पूष्णि सूर्य्ये, स्यन्दनाश्वानां रथवाजिनां, त्रसनेन मदागमनवेगजनितभीषणशब्दस्य कारणमनुमातुमक्षमतया अकस्मात् कोऽयमुपद्रवः समुपस्थितः इति भयेन, विचलिते चञ्चलीभूते, कथमेते मदाश्वाः चलन्ताः इति चकिते सतीति यावत्, अग्रजेन मम ज्येष्ठभ्रात्रा अरुणेन, ("सूरसूतोऽरुणोऽनूरुः काश्यपिर्गरुडाग्रजः" इत्यमरः) सूर्य्यसारथि-नेति यावत्, सानन्दं भ्रातृदर्शनात् साह्लादं यथा तथा, दृष्टः अवलोकितः, तथा प्रान्ते आगमनकाले पथि मार्गे, अत एव अवसज्जद्भिः सम्पद्भिः, मदागमनवेगोत्थवात्यया प्रतप्तस्य इत्यर्थः. [ प्रान्तस्य "वर्त्म मर्पण" इति पाठे रूपमिदम् ] जलधर-पटलैः मेघसमूहैः, आयतीभूताः दीर्घीभूताः, पक्षाणां मेघसंलग्नत्वात् तत्सङ्गत्या दीर्घीभूतवत् प्रतीयमाना इति भावः; पक्षाः पतत्राणि यस्य तथाविधः एष अहं गरुडः इत्यर्थः, अहेः सर्पस्य, समयानुसारेण वासुकिना प्रतिदिनं प्रेषितस्येति भावः, ग्रासे भक्षणे, गृध्नुः लोलुपः सन्, क्षणेन अल्पक्षणमध्येनैव; यद्वा—क्षणेन उत्सवेन, अचिरं सम्प्राप्स्यमानभक्षणानन्देन हेतुनेत्यर्थः, ("निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः" इत्यमरः) मलयं मलयाख्यं वेलामहीध्रं वेलायाम् अम्बुकूले, ("वेला कालेऽपि च सीमायामम्बु कूलविकारयोः" इति मेदिनी) यः महीध्रः पर्वतः तं समुद्रतटस्थितं पर्वतं, प्राप्तः समागतः । [ अत्र चन्द्रबिम्बदर्शनेन शेषमूर्त्तिस्मरणात् स्मरणालङ्कारः, तथा जलधरपटलैः पक्षाणां वास्तवायतीभूतत्वाभावेऽपि आयतीभूत इवेति प्रतीयमानत्वात्

नायकः । [ सपरितोषम् ] ।—

संरक्षता पन्नगमद्य पुण्यं
मयाऽर्जितं यत् स्वशरीरदानात् ।
भवे भवे तेन ममैव भूयात्
परार्थहेतोः खलु देहलाभः ॥ २५ ॥

गरुडः । [ नायकं निर्दिश्य ]—

अस्मिन् वध्यशिलातले निपतितं शेषानहीन् रक्षितुं
निर्भिद्याशनिचण्डचञ्चुतरया चञ्च्वाऽधुना वक्षसि ।
भोक्तुं भोगिनमुद्धरामि तरसा रक्ताम्बरप्रावृतं
दिग्धं मद्भयदीर्यमाणहृदयप्रस्यन्दिनेवासृजा ॥ २६ ॥

प्रतीयमानोत्प्रेक्षा, किञ्च, गरुडागमने आच्छादकत्वप्रभुतायाः हेतुत्वेनोपन्यासात् काव्य-लिङ्गञ्च, इत्येतयोः संसृष्टिः ] । स्रग्धरा वृत्तम् ॥ २४ ॥

गरुडागमनं दृष्ट्वा स्वकीयपरोपकारप्रवृत्तिः अचिरमेव सफला भविष्यतीत्याकलय्य जीमूतवाहनः स्वमनोरथं विवृणोति, संरक्षतेति ।—अद्य स्वशरीरदानात् पन्नगं सर्पं, संरक्षता त्रायता, मया यत् पुण्यं सुकृतम्, अर्जितम् समुपार्जितं, तेन पुण्येन, भवे भवे एव जन्मनि जन्मनि एव, प्रत्येकजन्मनीत्यर्थः, न तु द्वित्रिजन्मनोरेवेत्यर्थः ; परार्थहेतोः खलु परस्यार्थमेव, परोपकारार्थमेव, न त्वन्यकार्यार्थमिति भावः ; मम देहलाभः शरीरप्राप्तिः भूयात् भवेत्, [ आशंसायां लिङ् । अत्र प्रथमार्द्धे शरीररूप-न्यूनवस्तुना पुण्यरूपोत्तमवस्तुविनिमयात् परिवृत्तिरलङ्कारः ; एवं द्वितीयार्द्धे प्रतिजन्मा-न्तरे परार्थहेतोः देहलाभे एतज्जन्मार्जितपुण्यस्य हेतुत्वेनोपन्यासात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः इत्यनयोः संसृष्टिः । उपजातिः वृत्तम् ॥ २५ ॥

अस्मिन्निति ।—शेषान् मम भोजनाय निर्दिष्टाद्व्यतिरिक्तान् अन्यान् इत्यर्थः, अहीन् नागान् रक्षितुं त्रातुम्, अस्मिन् परिदृश्यमाने, वध्यशिलातले निपतितं शयितं, रक्ताम्बरप्रावृतं रक्तवस्त्राच्छादितम्, अत एव मत्तो भयेन दीर्यमाणात् स्फोटमानात्, हृदयात् वक्षसः, प्रस्यन्दिना स्रवता, असृजा रुधिरेण, दिग्धमिव लिप्तमिव, परिदृश्य-मानमिति शेषः भोगिनं पन्नगम्, अधुना अशनिचण्डचञ्चुतरया इयमनयोरतिशयेन चण्डचञ्चुः सुतीक्ष्णा तया चण्डचञ्चुतरया, [ अत्र चण्डचञ्चुशब्देनैव सुतीक्ष्णार्थे लब्धे-ऽपि विशेषेण सुतीक्ष्णार्थद्योतनार्थं तरप् प्रत्ययो बोध्यः ; यद्वा—तरपं स्वार्थिको

[ इत्यभिपत्य नायकं गृह्णाति, नेपथ्ये पुष्पाणि पतन्ति, दुन्दुभयश्च स्वनन्ति ]। ( च )

गरुडः। [ सविस्मयम् ]। अये !—

आमोदानन्दितालिर्निपतति किमियं पुष्पवृष्टिर्नभस्तः !!
स्वर्गे किं वैष चक्रं मुखरयति दिशां दुन्दुभीनां निनादः !! ।

[ विहस्य ]। ( त )—

आं ज्ञातं सोऽपि मन्ये मम जवमरुता कम्पितः पारिजातः
सर्वैः संवर्त्तकाभ्रैरिदमपि रसितं जातसंहारशङ्कैः ॥ २७ ॥

बोध्यः, यथा—"युधिष्ठिरः श्रेष्ठतमः कुरूणाम्" इति ] अशनेः वज्रादपि, चण्डचण्डतरया अतिसुतीक्ष्णया, चञ्च्वा त्रोट्या, वक्षसि उरसि, [ अवच्छेदे सप्तमी ] निर्भिद्य विदार्य, भोक्तुं तरसा बलेन वेगेन वा, उद्धरामि ऊर्ध्वं नयामीत्यर्थः। [ उत्प्रेक्षाऽलङ्कारः ]। शार्दूलविक्रीडितं वृत्तम् ॥ २६ ॥

( च ) अभिपत्य ऊर्ध्वात् नायकोपरि निपत्य। गृह्णाति, चञ्च्वा इति शेषः। स्वनन्ति ध्वनन्ति।

आमोदेति।—आमोदेन अतिसौरभेण, आनन्दिताः हर्षिताः, अलयो भ्रमरा यया तादृशी, इयं पुष्पाणां वृष्टिः किं कथं, नभसः आकाशात्, निपतति !! किं वा कथं वा, स्वर्गे एषः श्रूयमाणः, दुन्दुभीनां वाद्यविशेषाणां, निनादः ध्वनिः, दिशां चक्रं दिङ्मण्डलं, मुखरयति !! ध्वनयति !! शब्दवत् कारयतीत्यर्थः। इति पूर्वार्द्धव्याख्या।

( त ) विहस्य मध्यमं हसित्वा, ( "मध्यमः स्यात् विहसितम्" इत्यमरः ) पुष्पवर्षणादौ स्वकीयवेगाधिक्यमेव कारणमिति निश्चित्य चित्तप्रसाद एवात्र हासहेतुर्बोध्यः।

उत्तरार्द्धेन हासहेतुं वर्णयति, आमिति।—आम इति निश्चयार्थकमव्ययम्, ( "आं ज्ञाननिश्चययुक्त्योः" इति मेदिनी ) ज्ञातं सम्यक् विदितं, मम जवमरुता वेगानिलेन, मदागमनवेगोत्थपवनवायुनेत्यर्थः, सः अतिप्रसिद्धः, पारिजातोऽपि देवतरुविशेषोऽपि, मदागमनवेगेन स्वर्गस्थितस्तरपि कम्पितः, मर्त्यतरूणां कम्पनस्य कथैव नास्तीत्यपेरर्थः; कम्पितः चालितः; तेनैतत्पुष्पवृष्टिरिति भावः; तथा सर्वैः संवर्त्तकाभ्रैरपि प्रलयकालिकमेघविशेषैरपि, जाता संहारस्य प्रलयस्य, शङ्का येषां तथाभूतैः

नायकः । [ आत्मगतम् ] । दिष्ट्या कृतार्थोऽस्मि । (थ)

गरुडः । [ नायकं पश्यन् ] । (द)—

नागानां रक्षिता भाति पुरुषेषु यथा मम ।
तथा सर्पाशनाकाङ्क्षां व्यक्तमद्यापनेष्यति ॥ २८ ॥

तत् यावदेनं गृहीत्वा मलयपर्वतमारुह्य यथेष्टमाहारयामि ।

[ इति निष्क्रान्तः ] ।

इति निष्क्रान्ताः सर्वे ।

इति चतुर्थोऽङ्कः ।

---

सद्भिः, दृष्टं रचितं गर्जितम्, इति मन्ये सम्भावयामि । [ उत्प्रेक्षाऽलङ्कारः ] । स्रग्धरा वृत्तम् ॥ २७ ॥

(थ) दिष्ट्या भाग्येन, सौभाग्यवशादित्यर्थः । कृतार्थः सिद्धप्रयोजनः, सफल-मनोरथ इत्यर्थः ।

(द) पश्यन् अवलोकयन्, नायं सामान्यः नागः, परन्तु परार्थोत्सृष्टदेहः कश्चित् पुरुषश्रेष्ठः इति विमृश्यैव निश्चिन्वन् इत्यर्थः ।

महाप्रभावस्य नायकस्य दर्शनेनान्यथाभूतचित्तः गरुडः स्वमनोभावं विवृणोति, नागानामिति ।—पुरुषेषु पुरुषजातिषु मध्ये, [ निर्द्धारे सप्तमी ] नागानां सर्पाणां, मम भोजनार्थं निर्दिष्टानामिति भावः; रक्षिता त्राता, स्वजीवनदानेन नागवंश-परित्राणकर्त्ता इति यावत्, कोऽप्ययं महापुरुषः इति शेषः, यथा यद्वदित्यर्थः, भाति राजते; अद्यापि विद्यते इति भावः; तथा तदा, मम सर्पाशनाकाङ्क्षां सर्पभोजन-स्पृहाम्, अद्य अस्मिन् दिने, व्यक्तं स्फुटं, निश्चितमित्यर्थः, अपनेष्यति निवारयिष्यति; एतस्य महत्त्वेन भाविनी पुनर्नागविनाशप्रवृत्तिर्मे दूरीभविष्यतीति भावः । [ अत्र नाग-भोजनाकाङ्क्षाऽपनोदनं प्रति पुरुषभावः हेतुत्वेनोत्कीर्त्तनात् वाक्यार्थहेतुकं काव्यलिङ्ग-मलङ्कारः ] ॥ २८ ॥

# अथ पञ्चमोऽङ्कः।

[ ततः प्रविशति प्रतीहारः ]।

प्रती। स्वगृहोद्यानगतेऽपि स्निग्धे पापं विशङ्कते स्नेहात्।
किमु दृष्टबह्वपायप्रतिभयकान्तारमध्यस्थे ? ॥ १ ॥

तथा हि, जीमूतवाहनो जलनिधिवेलाऽवलोकनकुतूहली निष्क्रान्तश्चिरयतीति दुःखमास्ते महाराजविश्वावसुः। समादिष्टश्चास्मि तेन, यथा—"सुनन्द ! श्रुतं मया सन्निहितगरुड़प्रतिभयमुद्देशं ( क ) जामाता जीमूतवाहनो गत इति शङ्कित

अथ जीमूतवाहनवार्त्तार्थं विश्वावसुराजादिष्टः प्रतीहारः तस्यैव महाराजस्योत्कण्ठाहेतुं विवृणोति, स्वगृहेति।—स्निग्धे स्नेहभाजने जने इत्यर्थः, स्वस्य गृहे वासगृहसमीपे, यत् उद्यानम् उपवनं, गृहाराम इत्यर्थः, तद्गतेऽपि तत्रस्थेऽपि, अतिनिकटस्थानगतेऽपीत्यर्थः, स्नेहात् वात्सल्यात्, पापम् अनिष्टं, विशङ्कते वितर्कयति, प्रियजनैरिति शेषः, दृष्टः प्रत्यक्षीकृतः, बहुः अपायः विघ्नः विनाशो वा यत्र तादृशं यत् प्रतिभयं भयङ्करं, ( "भयङ्करं प्रतिभयम्" इत्यमरः ) कान्तारं महारण्यं, ( "कान्तारोऽस्त्री महारण्ये बिले दुर्गमवर्त्मनि" इति मेदिनी ) तन्मध्ये तिष्ठतीति तथाभूते सति स्निग्धे इति पूर्ववाक्येनान्वयः, किमु ? किं पुनः वक्तव्यम् ? अवश्यं शङ्कितव्यमेवेत्यर्थः। [ अत्र स्वगृहोद्यानगतेऽपि यदा पापशङ्का जायते इति वाक्येन महारण्यमध्यस्थे सति तथाविधाशङ्कायाः कथैव नास्तीति दण्डापूपिकया अर्थान्तरबोधनात् अर्थापत्तिरलङ्कारः ]। आर्या वृत्तम् ॥ १ ॥

( क ) जलनिधीति।—जलनिधेः समुद्रस्य, वेला अम्बुविकारः, जलोच्छ्वास इत्यर्थः, ( "अब्ध्यम्बुविकृतौ वेला कालमर्यादयोरपि" इत्यमरः ) तदवलोकने कुतूहलमस्यास्तीति तादृशः सन्। चिरयति विलम्बयति। दुःखं कष्टं, समनःपीड़ं यथा तथेत्यर्थः। सन्निहितेति।—सन्निहितेन समागतेन, गरुड़ेन प्रतिभयं भयङ्करम्; यद्वा—सन्निहितं नित्यमेवावस्थितं, गरुड़ात् प्रतिभयं भयं यत्र तादृशं, ( "प्रतिभयं

एवाश्रम अनेन । तत् त्वरितं विज्ञायागच्छ, किमसौ स्वगृह-मागतो न वा ?" इति । यावत् तत्र गच्छामि । [परिक्रामन्नग्रे दृष्ट्वा]। अयमसौ राजर्षिर्जीमूतवाहनस्य पिता जीमूतकेतुः उटजाङ्गने सह स्वधर्मचारिण्या राजपुत्र्या (ख) च पर्य्युपास्य-मानः (ग) तिष्ठति । तथा हि—

क्षौमे भङ्गवती तरङ्गतरले फेनाम्बुतुल्ये वहन्
जाह्नव्येव विराजितः सुपयसा देव्या महापुण्यया ।
धत्ते तोयनिधेरयं सुमहतीं जीमूतकेतुः श्रियं
यस्यैषाऽन्तिकवर्त्तिनी मलयवत्याभाति वेला यथा ॥ २ ॥

तत् यावदुपसर्पामि ।

---

भये । धीरेऽपि" इति मेदिनी ) गरुडविनष्टनागास्थिराशीनां सर्वदैव सत्त्वादति-भयङ्करमित्यर्थः । उद्देशं स्थानम् ।

(ख) उटजस्य पर्णशालायाः, मुनिजनवासोपयोगिपत्रादिनिर्मितगृहस्येत्यर्थः, ("मुनीनान्तु पर्णशालोटजोऽस्त्रियाम्" इत्यमरः) अङ्गने चत्वरे । स्वधर्मं पातिव्रत्यं, चरति या सा तया स्वधर्मचारिण्या सहधर्मिण्या, स्वस्य धर्मचारिण्या इति विग्रहो वा । राजपुत्र्या मलयवत्या ।

(ग) पर्य्युपास्यमानः सेव्यमानः ।

क्षौमे इति ।—भङ्गवती भङ्गिमती, सङ्कोचरेखायुक्ते इत्यर्थः, तरङ्गतरले ऊर्मिवत् चपले ; अतिसूक्ष्मत्वात् वायुना चालिते इति भावः ; फेनाम्बुतुल्ये सफेनजलनिभे, अतिशुभ्रे इति भावः ; क्षौमे पट्टकूले, पट्टवस्त्रद्वयमित्यर्थः, वहन् परिदधानः, तथा सुपयसा निर्मलसलिलया, अन्यत्र—सुस्तन्यया, यतस्तन्यपानेन जीमूतवाहनतुल्यः सुपुत्रः प्रवर्द्धितोऽभूत्, तस्य सुस्तन्यत्वे विचिकित्साऽभावादिति भावः ; महत् पुण्यं पावित्र्यं यस्यास्तया महापुण्यया पवित्रतासम्पादिकया, अन्यत्र—महत् पुण्यं सुकृतं यस्यास्तया अतिपवित्रया, महापुण्यवत्या इत्यर्थः, अत एव जाह्नव्या इव गङ्गया इव, देव्या महिष्या, विराजितः शोभितः, अयं जीमूतकेतुः जीमूतवाहन-पिता, तोयनिधेः समुद्रस्य, सुमहतीम् अनुरूपां, श्रियं शोभां, धत्ते धारयति, एषा मलयवती यस्य अन्तिकवर्त्तिनी समीपवर्त्तिनी, वेला यथा तटीव, ("वेला कालेऽपि

[ ततः प्रविशति पत्नी-वधूसमेतो जीमूतकेतुः ] ।

जीमू। भुक्तानि यौवनसुखानि यशोऽवकीर्णं
राज्ये स्थितं स्थिरधिया चरितं तपोऽपि ।
श्लाघ्यः सुतः सुसदृशान्वयजा स्नुषेयं
चिन्त्यो मया ननु कृतार्थतयाऽद्य मृत्युः ॥ ३ ॥

सुनन्दः। [ उपसृत्य ]। जीमूतवाहनस्य—" (घ)

जलधेः तीरनीरविकारयोः" इति विश्वः) आभाति भ्राजते ; समुद्रो यथा कदाऽपि वेलां नातिक्रामति, सदैव वेलाऽन्तिके वर्तते, एवं जीमूतकेतुरपि मलयवती-मुखस्य कुत्रापि न गच्छति, सदैव तया परिचर्य्यमाणस्तिष्ठति इत्यतो मलयवत्याः वेलासाम्यमिति भावः। [ अत्र पादचतुष्टये यथाक्रमं तुल्य-इव-सदृश-यथाशब्दानां प्रयोगात् उपमाऽलङ्कारः, स च सुपयसा महापुण्यया इति श्लेषेणानुप्राणितः इत्यनयोः सङ्करः ]। शार्दूलविक्रीडितं वृत्तम् ॥ २ ॥

ऐहिकसुखस्य पराकाष्ठामधिगतो जीमूतकेतुः स्वस्य देहावसानं कामयति, भुक्तानीति।—मया यौवनसुखानि भुक्तानि अनुभूतानि, यशसा अवकीर्णे व्याप्ते, पूर्णे इत्यर्थः, राज्ये स्थितं यशसा सह राज्यं पालितमित्यर्थः, स्थिरधिया अनन्यमनसा सता इत्यर्थः, तपः चान्द्रायणादिकमपि, चरितं कृतम्, अनुष्ठितमित्यर्थः, सुतः पुत्रः जीमूतवाहनः, ममेति शेषः, श्लाघ्यः सर्वजनप्रशंसनीय इत्यर्थः, इयञ्च परिदृश्यमाना, स्नुषा वधूः, पुत्रवधूर्मलयवतीत्यर्थः, सुसदृशान्वयजा अनुरूपवंशो-द्भवा, सद्वंशप्रसूतेत्यर्थः, ननु अत एव, अद्य इदानीं, कृतार्थतया सर्वेषु विषयेषु चरितार्थतया, सर्वकर्त्तव्यस्य परिसमाप्ततयेत्यर्थः, मृत्युः चिन्त्यः विभाव्यः, प्रार्थनीयत्वेनेति शेषः, इत्थं कृतकृत्योऽहं कदा मृत्युमुखं प्रयास्यामीति चिन्तयामीत्यर्थः। [ अत्र मृत्युचिन्तने पादत्रितयस्थवाक्यानां हेतुत्वेनोपन्यासात् वाक्यार्थहेतुकं काव्य-लिङ्गमलङ्कारः ] वसन्ततिलकं वृत्तम् ॥ ३ ॥

(घ) इदानीं तृतीयं पताकास्थानं निरूप्यते। अत्र "भुक्तानि" इत्यादि-श्लोकस्य अन्तिमपादे जीमूतकेतुप्रयुक्तात् "मृत्युः" इति पदात् अव्यवहितोत्तरकाल-मेव समागतेन सुनन्देन "जीमूतवाहनस्य" इति पदोच्चारणात् जीमूतवाहनस्य मृत्युः इत्यर्थोपक्षेपादस्य तृतीयपताकास्थानत्वमवगन्तव्यम्। तदुक्तं दर्पणे—"यत्रार्थे चिन्तितेऽन्यस्मिन् तल्लिङ्गोऽन्यः प्रयुज्यते। आगन्तुकेन भावेन पताकास्थानकन्तु

जीमू। [ कर्णौ पिधाय ]। शान्तं पापम्।

वृद्धा। पडिहदं क्खु एदं अमंगलं। (१)

मल। वेवदि मे हिअअं इमिणा दुण्णिमित्तेण। (२)

जीमू। [ वामाक्षिस्पन्दनं सूचयित्वा ]। भद्र! किं जीमूतवाहनस्य ?

सुनन्दः। जीमूतवाहनस्य वार्त्तामन्वेष्टुं (ङ) महाराज-विश्वावसुना युष्मदन्तिकं प्रेषितोऽस्मि।

जीमू। किमसन्निहितः (च) तत्र मे वत्सः ?

वृद्धा। [ सविषादम् ]। महाराअ! जइ तहिं ण सण्णिहिदो, ता कहिं गदो मे पुत्तओ भविस्सदि ? (३)

जीमू। नूनमस्मत्परित्राणार्थं (छ) गतो भविष्यति।

मल। [ सविषादमात्मगतम् ]। अहं उण अज्जउत्तं अपेक्खंती अण्णं ज्जेव्व किंवि (ज) आसंकामि। (४)

सुनन्दः। आज्ञापय, किं मया स्वामिनः (झ) निवेदनीयम् ?

---

(१) प्रतिहतं खल्वेतदमङ्गलम्।

(२) वेपते मे हृदयमनेन दुर्निमित्तेन।

(३) महाराज! यदि तत्र न सन्निहितः, तत् क्व गतो मे पुत्रको भविष्यति ?

(४) अहं पुनरार्य्यपुत्रमप्रेक्षमाणा अन्यदेव किमपि आशङ्के।

---

तम॥" इति। "वर्णोच्चयपदं यत्तु लीनं सविनयं भवेत्। श्लिष्टमत्युत्तरोपेतं दतीव-मिदमुच्यते॥" इति च।

(ङ) अन्वेष्टुं प्रष्टुमित्यर्थः।

(च) असन्निहितः अनुपस्थित इत्यर्थः।

(छ) अस्मत्परित्राणार्थम् अस्माकं जीवितसमाहरणार्थमित्यर्थः।

(ज) अन्यदेव किमपि नात्मपरित्राणार्थं, परन्तु अन्यत् किमपि प्राणं रक्षार्थं तस्य गरुडमहत्त्वं सञ्जातमिति भावः।

(झ) स्वामिनः स्वामिने इत्यर्थः, [ सम्बन्धविवक्षया षष्ठी ]।

जीमूत। [वामाक्षिस्पन्दनं सूचयित्वा]। जीमूतवाहनश्चिरयतीति पर्य्याकुलोऽस्मि हृदयेन। (अ)—

स्फुरसि किमु दक्षिणेतर! मुहुर्मुहुः सूचयन्ममानिष्टम्?।
हतचक्षुरपहृतं ते स्फुरितमिहार्यं करिष्यते भानुः॥ ४॥

[ऊर्ध्वमवलोक्य]। अयमेव त्रिभुवनैकचक्षुर्भगवान् सहस्रदीधितिः स्फुटं (ट) जीमूतवाहनस्य श्रेयः करिष्यति। [विलोक्य सविस्मयम्]।—

आलोक्यमानमतिलोचनदुःखदायि
रक्ताच्छटा निजमरीचिरुचो विमुञ्चत्।
उत्पातवाततरलीकृततारकाभम्
एतत् पुरः पतति किं सहसा नभस्तः?॥ ५॥

कथम्!! चरणयोरेव पतितम्!!

(अ) पर्य्याकुलोऽस्मि हृदयेन व्याकुलचित्तोऽस्मि। [प्रकृत्यादित्वात्तृतीया]।

दुर्निमित्तप्रशमनमाशंसते, स्फुरसीति।—दक्षिणेतर! हे वाम! हतचक्षुः! हताधम! मुहुः मुहुः पुनः पुनः, मम अनिष्टम् अमङ्गलं, सूचयत् प्रकटयत्, किमु किमर्थं, स्फुरसि? स्पन्दसे? त्वमिति शेषः, अयं भानुः सूर्य्यः, इह अस्मिन् अमङ्गलसूचनविषये इत्यर्थः; यद्वा—इह तवाधिष्ठानभूतेऽस्मिन् गोलके, इति अङ्गुल्या निर्देशः; ते तव, स्फुरितं स्पन्दनम्, अपहृतं विनाशितं, करिष्यते; सूर्य्यदेवस्य प्रसादेन वामाक्षिस्पन्दनरूपं दुर्निमित्तं नङ्क्ष्यतीति भावः। आदित्यदर्शनात् वामाक्षिस्पन्दनदुर्निमित्तं प्रशाम्यतीति शकुनशास्त्रम्। गीतिश्छन्दः॥ ४॥

(ट) त्रिभुवनस्य एक मुख्यं, चक्षुरिव चक्षुः नेत्रं, दर्शनसाधनचक्षुरिन्द्रियसत्त्वेऽपि सूर्य्याभावे दर्शनाभावात् तस्य मुख्यचक्षुष्ट्वमवगन्तव्यम्। सहस्रदीधितिः सहस्रकिरणः सूर्य्यः। स्फुटं व्यक्तं, निश्चितमित्यर्थः।

नभस्तलात् पतमानमरुणाभं किमपि दृष्ट्वा वितर्कयति, आलोक्यमानमिति।—

आलोक्यमानं दृश्यमानम्, अक्ष्णोरिति शेषः, अति अतिशयेन, लोचनयोर्दुःखं ददातीति तादृशम् अतिलोचनदुःखदायि अतिभासुरत्वेन नयनयोरतिदुःखदम्, आलोक्यमानं सत् अतिलोचनदुःखदायि एवं वा योज्यम्; निजमरीचिरुचः निजस्य स्वस्य, हे भगवन् सहस्रदीधिते! तव इत्यर्थः, मरीचीनां

सर्वे। [निरूपयन्ति]।

जीमू। अयि! कथं लग्नरुधिरमांसचूडामणिः !! (ठ) कस्य पुनरयं स्यात्?

वृद्धा। [सविषादम्]। महाराअ! पुत्तअस्स विअ मे एदं चूडारअणं? (५)

मल। अंब! मा एव्वं भण। (६)

सुनन्दः। महाराज! मैवमविज्ञाय विक्लवीभूः। अत्र हि तार्क्ष्येण भक्ष्यमाणानां नागाधिपानामनेके नखमुखोत्खाताः (ड) पतन्त्येते शिरोमणयः।

जीमू। देवि! सोपपत्तिकमभिहितम्। (ढ) कदाचिदेवमपि स्यात्।

(५) महाराज! पुत्रकस्येव मे एतच्चूडारत्नम्?

(६) अम्ब! मैवं भण।

किरणानामिव, रुचः प्रभाः यासां तादृशीः, रक्ताः रक्तवर्णाः रुटाः दीप्तीः, विमुञ्चत् विकिरदित्यर्थः, तथा उत्पातवातेन दुर्निमित्तसूचकवात्यया, तरलीकृता चञ्चलीकृता, नभोमण्डलात् पातिता इत्यर्थः; यद्वा—तरलीकृता भास्वरीकृता, मेघाद्यावरणापनोदनेन समुज्ज्वलीकृता इत्यर्थः, ("तरलं चञ्चले विद्धे भास्वरेऽपि विलासवत्" इति विश्वः) या तारका नक्षत्रं, तस्याः आभा इव आभा यस्य तादृशम्, एतत् इदं, किं नु सहसा नभस्तः अन्तरीक्षात्, पुरः अग्रतः, पतति? [अत्र उपमाऽलङ्कारः]। वसन्ततिलकं वृत्तम् ॥ ५ ॥

(ठ) लग्नेति।—लग्नं संसक्तं, रुधिरम् आर्द्रं, रक्ताक्तमिति यावत्, मांसं यस्मिन् तथाभूतः। चूडामणिः शिरोरत्नम्।

(ड) अविज्ञाय विशेषमज्ञात्वा। मा विक्लवीभूः न व्याकुलो भव। ["माङि लुङ्" (३।३।१७५ पा०) इति मा योगे भवतेर्लुङ्] तार्क्ष्येण गरुडेन। नखमुखेन नखाग्रेण, उत्खाताः उत्पाटिताः।

(ढ) औपपत्तिकं सयुक्तिकम्।

वृद्धा। सुणंदअ! जाव इमाए वेलाए ससुरसदणं ज्जेव्व आअदो मे पुत्तओ भविस्सदि। ता गच्छ, जाणिअ लहुं संपादेहि। (ञ) (ट)

सुनन्दः। यदाज्ञापयति देवी। [इति निष्क्रान्तः]।

जीमू। देवि! अपि नागचूड़ामणिः स्यात्। (ठ)

[ततः प्रविशति रक्तांशुकसंवीतः (ड) शङ्खचूडः]।

शङ्ख। [सास्रम्]—

गोकर्णमर्णवतटे त्वरितं प्रणम्य
प्राप्तोऽस्मि तां खलु भुजङ्गमवध्यभूमिम्।
आदाय तं नखमुखक्षतवक्षसञ्च
विद्याधरं गगनमुत्पतितो गरुत्मान्॥ ६॥

(ञ) सुनन्दक! यावदनया वेलया श्वशुरसदनमेवागतो मे पुत्रको भविष्यति। तद्गच्छ, ज्ञात्वा लघु सम्पादय।

(ट) श्वशुरसदनं श्वशुरगृहम्। लघु शीघ्रम्। सम्पादय संसाधय, मनोत्कण्ठाऽपनोदनमिति शेषः, तद्वार्त्तामादाय द्रुतं समागच्छेत्यर्थः।

(ठ) अपि सम्भावनायाम, ("अपि सम्भावनाप्रश्नशङ्कागर्हासमुच्चये" इति मेदिनी) चूड़ामणिरयं कस्यचित् नागस्य भवेदिति सम्भावयामीत्यर्थः।

(ड) रक्तेति।—रक्तांशुकाभ्यां संवीतः आच्छादितः।

गोकर्णमिति।—अर्णवतटे समुद्रतीरे, गोकर्णं तदाख्यं शिवलिङ्गं, प्रणम्य त्वरितं खलु सत्वरमेव, भुजङ्गमानां वध्यभूमिं यस्यां भूमौ गरुड़ो भुजङ्गमान् घातयति तां भूमिं तं देशं, प्राप्तः आगतः, अस्मि, अहमिति शेषः; गरुत्मांश्च गरुड़श्च, नखमुखेन नखाग्रेण, क्षतं विदारितं, वक्षो यस्य तादृशं, तं पूर्वदृष्टं, विद्याधरं जीमूतवाहनम, आदाय गृहीत्वा, गगनम् आकाशम, उत्पतितः उड्डीय गतः। [न मे विलम्बः सञ्जातः, तथाऽपि मद्देवाहमनोरथितः, तदेव गरुड़स्समादाय उद्गतः इति प्रागुत्पन्नगरुड़पयोः क्रिययोः योगपद्यात् समुच्चयालङ्कारः]। वसन्ततिलकं वृत्तम्॥ ६॥

[रुदन्]। हा महासत्त्व! हा परमकारुणिक! हा निष्कारणैकबान्धव! हा परदुःखदुःखित! क्व गतोऽसि? प्रयच्छ मे प्रतिवचनम्। हा शङ्खचूडहतक! किं कृतं त्वया?—

नाहित्राणा कीर्त्तिरेकाहमाप्ता
नापि श्लाघ्या स्वामिनोऽनुष्ठिताऽऽज्ञा।
दत्त्वाऽऽत्मानं रक्षितोऽन्येन शोच्यो
हा धिक्! कष्टम्! वञ्चितो वञ्चितोऽसि ॥ ७ ॥

जीमूतवाहनविनाशे निमित्तीभूतमात्मानमधिक्षिपति, नेति।—"हा शङ्खचूडहतक! त्वया" इति गद्योक्तवाक्यद्वयमत्राकर्षणीयम्। हा शङ्खचूडहतक! हा महापापशङ्खचूड!, इति आत्मानं प्रति आक्षेपोक्तिः, त्वया एकाहम्, अपि एव अध्याहार्य्यः, एकदिनमपीत्यर्थः, अहीन् भुजङ्गान्, त्रायते रक्षति इति, अहीनां त्राणं यस्याः सा इति वा अहित्राणा सर्परक्षिणी, कीर्त्तिः यशः, न आप्ता न प्राप्ता, एकाहमपि मया "भुजङ्गत्राता अयम्" इति कीर्त्तनं लब्धा इति समुदायार्थः, स्वामिनः प्रभोः, नागराजस्येत्यर्थः, श्लाघ्या आदरणीया, आदेशस्य परार्थसम्पादन-रूपसत्कार्य्यफलकत्वात् श्लाघ्यत्वं बोध्यम्; आज्ञाऽपि न अनुष्ठिता न कृता, त्वयाऽद्य नागकुलरक्षणाय भुजङ्गभक्षवे आत्मा देय इति स्वाम्यादेशोऽपि न पालित इत्यर्थः, प्रत्युत अन्येन केनचित् साधुनेत्यर्थः, आत्मानं स्वजीवनं, दत्त्वा रक्षितः परित्रातः, अत एव शोच्यः शोचनीयः, असि त्वं बन्धुभिरिति शेषः, सत्कार्य्यकरणसुयोगपरित्यागात् स्वाम्यादेशाननुष्ठानात् परप्राणविनिमयेनात्मजीवनरक्षणाच्चेति भावः; हा खेदे, ("हा विषादे च शोके च कुत्सादुःखार्थयोरपि" इति मेदिनी) धिक् इति आत्मभर्त्सनसूचकमव्ययम्, ईदृशनिन्दनीयकर्मकरणात् त्वां भर्त्सयामीत्यर्थः, ("धिक् निर्भर्त्सननिन्दयोः" इत्यमरः) कष्टम्! कृच्छ्रम्!, अतीव दुःखकरमेतदित्यर्थः, वञ्चितः वञ्चितः अतिशयेन वञ्चितः, विधिनेति शेषः, असि। [अत्र "वञ्चितोऽसि" इति वाक्यस्य हेतुः पादत्रयगतवाक्यानि, तस्य वाक्यार्थगतत्वात् काव्यलिङ्गमलङ्कारः, स च प्रक्रान्तस्याहिरक्षणरूपस्य यशसः प्रभोरादेशपालनरूपस्य कर्त्तव्यस्य च वैफल्यात् तथा निजजीवनरक्षणार्थम् अन्यप्राणविनाशरूपस्यानिष्टस्यापतनाच्च विषमेणानुप्राणितः, इत्यनयोः सङ्करः]। शालिनी वृत्तं—"मात् तौ गौ चेच्छालिनी वेदलोकैः" इति लक्षणात् ॥ ७ ॥

तस्मादहमेवंविधः क्षणमपि जीवन्नुपहास्यमात्मानं करोमि। यावदेतदनुगमनं प्रति यतिष्ये। (द) [परिक्रामन् भूमौ दत्तदृष्टिः]।—

आदावुत्पीडपृथ्वीं प्रविरलपतितस्थूलबिन्दुं ततोऽग्रे
ग्रावस्वायामशीर्णप्रसृततनुकणां कीटकीर्णां स्थलीषु।
दुर्लक्ष्यां धातुभिन्ने घनतरुशिखरे श्यामनीलस्वरूपाम्
एनां तार्क्ष्यं दिदृक्षुर्निपुणमनुसरन् रक्तधारां व्रजामि॥ ८॥

वृद्धा। [सबाष्पम्]। महाराअ! एसो ससोओ विअ अरुणवअणो इदो ज्जेव्व तुरिदं आअच्छन्तो हिअअं मे आकुली-करेदि; ता जाणीअदु दाव को एसो त्ति। (८)

(८) महाराज! एष सशोक इव अरुणवदन इत एव त्वरितमागच्छन् हृदयं मे आकुलीकरोति; तत् ज्ञायतां तावत् क एष इति।

(द) उपहास्यम् उपहासभाजनम्। एतदनुगमनम् एतस्य गरुडस्य, जीमूतवाहनस्य वा, अनुगमनम् अनुसरणम्। यतिष्ये यत्नं करिष्यामि।

गरुडानुसरणाय रक्तधारां दृष्ट्वा पन्थानं निरूपयति, आदाविति।—तार्क्ष्यं गरुत्मन्तं, दिदृक्षुः द्रष्टुमिच्छुः, अनुजिगमिषुः सन्निति भावः; आदौ प्रथमम्, उत्पीडेन उत्पीडनेन, वक्षसः सुदृढनिपीडनेनेति यावत्, पृथ्वीं महतीम्, विदारणक्षणे एव प्रबलवेगेन निःसरणात् प्रभूतामित्यर्थः, ततः अनन्तरम्, अग्रे पुरतः, किञ्चिदग्रे गमनानन्तरमित्यर्थः, प्रविरलाः अघनाः, पतिताः प्रथमक्षणे प्रभूतरक्तस्रावात् क्रमशः स्वल्पतया पतिता इति भावः; स्थूलाः बिन्दवो यस्यास्तादृशीम्, तथा ग्रावसु शिलासु, पाषाणोपरि इत्यर्थः, आयामेन दैर्घ्येण, शीर्णाः क्षीणाः, सूक्ष्मपाषाणोपरि पतनेन लोमन्यवत् दीर्घीभूतत्वात् सूक्ष्मीभूता इति भावः; प्रसृताः इतस्ततो विकीर्णाः, तनवः सूक्ष्माः, कणाः बिन्दवः यस्यास्तथाभूताम्, रक्तबिन्दूनां पाषाणोपरि पतनेन इतस्ततः चूर्णरूपतया प्रतीयमानत्वादिति भावः; तथा स्थलीषु वनभूमिषु, कीटैः क्षुद्रजीवैः, पिपीलिकादिभिरित्यर्थः, कीर्णां व्याप्ताम्, धातुभिः गैरिकादिभिः, भिन्ने मिश्रिते, रञ्जिते वा, पर्वते इति शेषः, दुर्लक्ष्यां दुर्दर्शाम्, तुल्यवर्णत्वादिति भावः; तथा घनानां सान्द्राणां, तरूणां शिखरे उपरिभागे, शिखरेषु इत्यर्थः; यद्वा—घने निविडे, शाखापल्लवादिबाहुल्यादिति भावः; तरोः शिखरे, [जातावेकवचनम्]

कौम्। यथाऽऽह देवी। [ आकर्ण्य सहर्षं विहस्य ]। देवि! मुञ्च शोकम्। अस्यायं चूडामणिर्नूनं मांसलोभात् केनापि पक्षिणा मस्तकादुत्खाय ( ध ) आनीयमानोऽस्यां भूमौ पपात।

वृद्धा। [ सपरितोषं सञ्जयवतीं समालिङ्ग्य ]। अविधवे! धीरा होहि, ण क्खु ईदिसो आकिदो वेहव्वदुक्खं अणुहोदि। (९) (न)

मल। [ सहर्षम् ]। अंब! तुम्हाणं आसिसा पमादेण। (१०)

[ पादयोः पतति ]।

कौम्। [ शङ्खचूडमवलोक्य ]। वत्स! कथमिव?

शङ्ख। दुःखातिभारात् बाष्पोपरुद्धकण्ठो न शक्नोमि कथयितुम्।

कौम्। आवेदय ममात्मीयं पुत्रदुःखं सुदुःसहम्।
सङ्क्रान्तमस्ति हृदये येन सह्यं भविष्यति ॥ ९ ॥

(९) अविधवे! धीरा भव। न खल्वीदृशी आकृतिर्वैधव्यदुःखमनुभवति।
(१०) अम्ब! युष्माकमाशिषां प्रसादेन।

---

स्त्यानं सान्द्रीभूतं, शुष्कीभावादिति भावः; अत एव नीलं कृष्णवर्णं, स्वरूपं यथायथोक्तां, सान्द्रीभूतस्य रक्तस्य कृष्णत्वेन परिदृश्यमानत्वादिति भावः, एतां रक्तधारां निपुणं सम्यक् यथा तथा, अनुसरन् व्रजामि गच्छामि, अहमिति शेषः। [ अत्र एकस्या रक्तधाराया वाक्-स्थल्यादिषु अनेकत्र भवनात् पर्य्यायालङ्कारः, स च रक्तस्वरूपवर्णनरूपस्वभावोक्त्या अनुप्राणितः ]। स्रग्धरा वृत्तम् ॥ ८ ॥

( ध ) आकर्ण्य श्रुत्वा, शङ्खचूडोक्तम् "आदो" इति शेषांशमिति शेषः। अस्य समागच्छतः पुत्रस्य। उत्खाय उत्पाट्य।

( न ) सर्वसुलक्षणसम्पन्नत्वात् वैधव्यलक्षणाभावाच्चेति भावः।

आवेदयेति।—आवेदय विज्ञापय, तव दुःखमिति शेषः, मम आत्मीयं स्वीयं, सुदुःसहम् अतिदुःखेनैव सोढुं शक्यं, पुत्रदुःखं पुत्रार्थे वैक्लव्यरूपं, हृदये सङ्क्रान्तं प्रविष्टम्, अस्ति, येन हृदयस्थितेन दुःखेन, सह्यं सोढुं शक्यं, तव दुःखावेदन-मिति भावः; भविष्यति। ("अस्ति" इत्यत्र "अस्तु" इति पाठे—हे पुत्र!

शङ्ख। श्रूयताम्। शङ्खचूडो नाम नागः खल्वहम् आहारार्थं वासुकिना वैनतेयाय प्रेषितः। किं वा विस्तरेण, कदाचिदियं रुधिरधारापद्धतिः पांशुभिरवकीर्यमाणा दुर्लक्ष्यतामुपयाति, (प) तत् सङ्क्षेपतः कथयामि—

विद्याधरेण केनापि करुणाऽऽविष्टचेतसा।
मम संरक्षिताः प्राणा दत्त्वाऽऽत्मानं गरुत्मते ॥१०॥

जीमू। कोऽन्य एवं परहितव्यसनी? (फ) वत्स! ननु स्पष्टमेवोच्यतां जीमूतवाहनेनेति। हा! हतोऽस्मि मन्दभाग्यः।

वृद्धा। हा पुत्तअ! कहं तुए एदं किदं? (११)

(११) हा पुत्रक! कथं त्वयैतत् कृतम्?

आत्मीयं सुदुःसहं दुःखम् आवेदय, मम हृदये सङ्क्रान्तं मिलितं, मम दुःखेन सह एकीभूतमित्यर्थः, अस्तु; अन्यथा कथमपि न सोढुं शक्ष्यामि, अत आह, येनेत्यादि। —येन सङ्क्रमणेन, सह्यं भविष्यति, तव दुःखमपीति शेषः; प्रथमं ज्ञापयसि चेत्, तर्हि कथङ्कथमपि सोढुं शक्ष्यामीति भावः॥ ९॥

(प) वैनतेयाय विनतानन्दनगरुडाय। किं वा विस्तरेण विस्तरोक्त्या अलम्-इत्यर्थः। रुधिरधारेति।—रुधिराणां धारापद्धतिः धाराविक्रम। पांशुभिः धूलिभिः। अवकीर्यमाणा आच्छाद्यमाना। दुर्लक्ष्यताम् अदृश्यतामित्यर्थः; रक्तपद्धतिरियं धूलिभिरवलुप्ता भवेच्चेत्, गरुडस्य मार्गनिर्णयः मे सुदुष्करः स्यात्, अतः शीघ्रमेव मया गन्तव्यमिति भावः।

विद्याधरेणेति।—करुणाविष्टचेतसा करुणया दयया, आविष्टम् अभिभूतं, चेतो यस्य तादृशेन, केनापि अविज्ञातपरिचयेन, विद्याधरेण गरुत्मते आत्मानं स्वदेहं, दत्त्वा मम प्राणाः संरक्षिताः। [अत्र प्राणरक्षणं प्रति करुणाविष्टचेतस्त्वस्य हेतुत्वात् काव्यलिङ्गमलङ्कारः] ॥ १० ॥

(फ) परेति।—परेषां हिते हितानुष्ठाने, व्यसनी आसक्तः, निरतः इत्यर्थः; परहितम् एव व्यसनं तदस्यास्तीति वा विग्रहः।

मल। कहं, सज्जोभूदं ज्जेव्व दुव्विलसिदं !! (१२)

सर्वे। [मोहं गच्छन्ति]।

शङ्ख। [सास्रम्]। नूनमेतौ पितरौ तस्य महासत्त्वस्य। कथमप्रियवादिना मया इमामवस्थां नीतौ? अथवा विषादृते विषधरस्य मुखात् किमन्यन्निःसरति? अहो! प्राणप्रदस्य सुसदृशं प्रत्युपकृतं जीमूतवाहनस्य शङ्खचूडेन!! तत् किम् अधुनैवात्मानं व्यापादयामि? (व) अथवा समाश्वासयामि तावदेतौ। तात! समाश्वसिहि। अम्ब! समाश्वसितु।

उभौ। [समाश्वसितः]।

वृद्धा। वच्छे! उट्ठेहि, मा रोअ। अम्हे किं जीमूदवाहणेण विणा जीवम्ह? ता समस्सस दाव। (१३)

मल। [समाश्वस्य]। अज्जउत्त! कहिं मए तुमं पेक्खिदव्वो? (१४)

जीमू। हा वत्स! गुरुचरणशुश्रूषाविधिज्ञ! (भ)—

चूडामणिं चरणयोर्मम पातयता त्वया।
लोकान्तरगतेनापि नोज्झितो विनयक्रमः॥ ११॥

(१२) कथं, सद्योभूतमेव दुर्विलसितम्!!

(१३) वत्से! उत्तिष्ठ, मा रुदिहि। वयं किं जीमूतवाहनेन विना जीवामः? तत समाश्वसिहि तावत्।

(१४) आर्य्यपुत्र! क्व मया त्वं प्रेक्षितव्यः?

(व) पितरौ मातापितरौ। महासत्त्वस्य महात्मनः। विषात् प्राणनाशनात् अप्रियवचनरूपादित्यर्थः। विषधरस्य नागस्य मम। प्रत्युपकृतम् उपकारस्य प्रतिदानं कृतम्। आत्मानं स्वम्। व्यापादयामि घातयामि।

(भ) गुरूणां पित्रादिगुरुजनानां, चरणानां चरणयोर्वा शुश्रूषायाः परिचर्य्यायाः, विधिं विधानं, जानातीति तत्सम्बोधने।

शुश्रूषाविधिज्ञत्वं प्रतिपादयति, चूडामणिमिति।—लोकान्तरगतेनापि परलोकप्रस्थितेनापि, त्वया मम चरणयोः चूडामणिं पातयता निक्षिपता सता, विनयक्रमः

[चूडामणिं गृहीत्वा]। हा वत्स! कथमेतावन्मात्रदर्शनः संवृत्तोऽसि? [हृदये दत्त्वा]। अहह!!!—

भक्त्या सुदूरमवनामितनम्रमौलेः
अश्वत् तव प्रणमतश्चरणौ मदीयौ।
चूडामणिर्निकषणैर्मसृणोऽप्यहिंस्रो
गाढं विचारयति मे हृदये कथं नु? ॥ १२ ॥

वृद्धा। हा पुत्त जीमूदवाहण! जस्स दे गुरुअणसुस्सूसं वज्जिअ अस्सं सुहं ण रोअदि, सो कहिं दाणिं पिदरं उज्झिअ सग्गसुहमणुहोदुं गदोसि? (१५)

जीमू। [सास्रम्]। देवि! किं जीमूतवाहनेन विना जीवामो वयं, येनैवं प्रलपसि?

(१५) हा पुत्र जीमूतवाहन! यस्य ते गुरुजनशुश्रूषां वर्जयित्वा अन्यत् सुखं न रोचते, स कुत्रेदानीं पितरमुज्झित्वा स्वर्गसुखमनुभवितुं गतोऽसि?

शिष्टाचारपद्धतिः, न उज्झितः न त्यक्तः, गुरुजनेषु पादस्पृष्टचूडामणिपूर्वकस्य प्रणामस्य शिष्टानुमोदितत्वादिति भावः। [अत्र विनयापरित्यागसूचकस्य वाक्यस्य मणिपातनहेतोः वाक्यगतत्वात् काव्यलिङ्गमलङ्कारः]॥ ११ ॥

चूडामणिदर्शनप्रवृद्धशोकावेगेन राज्ञो विलापमाह, भक्त्येति।—भक्त्या गुरुजनानुरागेण, सुदूरम् अत्यन्तं यथा तथा, अवनामितः प्रह्वीकृतः, नम्रः स्वभावविनतः, मौलिः मस्तकं येन तादृशस्य, अश्वत् सततं, मदीयौ चरणौ प्रणमतः वन्दमानस्य, तव निकषणैः घर्षणैः, मसृणः स्निग्धः, चूडामणिः अहिंस्रोऽपि कोमलः सन्नपि, मे मम, हृदये वर्तते, स्थित इति शेषः, गाढम् अत्यन्तं, विचारयति कथं नु? किम्?; कथमहं चरणयोर्योग्योऽपि हृदये धार्यते इति तर्कयतीव किम्? इति भावः। [उत्प्रेक्षाऽलङ्कारः। "गाढं विचारयति मे हृदये कथं नु" इत्यत्र "गाढं विदारयति मे हृदयं कथं नु?" इति पाठः साधीयान्, "मसृणः" "अहिंस्रोऽपि" इति विशेषणद्वयस्य "विचारयति" इति पाठे सार्थक्याभावात्। पाठेऽस्मिन् अहिंस्रोऽपि मे हृदयं कथं नु किमर्थं, गाढं विदारयति? विपाटयति? इत्यर्थः। अत्र मसृणोऽपि अहिंस्रोऽपि विदारयति इति विरोधात् विरोधाभासालङ्कारः]। वसन्ततिलकं वृत्तम् ॥ १२ ॥

मल। [पादयोर्निपत्य कृताञ्जलिः]। ता देहि मे अज्जउत्तचिण्हं चूडामणिं, जेण एदं हिअए कदुअ जलणपवेसेण (म) अवणेमि हिअअस्स संदावदुक्खं। (१६)

जीमू। पतिव्रते! किमेवमाकुलयसि? ननु सर्वेषामेव अस्माकमयं निश्चयः। (य)

वृद्धा। महाराअ! ता किं अम्हेहिं पडिपालीअदि? (१७) (र)

जीमू। न खलु देवि! किञ्चित्। किन्त्वाहिताग्नेः नान्येनाग्निना संस्कारो विहितः; अतोऽग्निहोत्रशरणादग्नीन् आदायात्मानमुद्दीपयामः। (ल)

गरु। [आत्मगतम्]। कष्टम्!! ममैकस्य कृते सकलमेवेदं विद्याधरकुलमुच्छिन्नम्। तदेवं तावत्। [प्रकाशम्]। तात! न

(१६) तद्देहि मे आर्य्यपुत्रचिह्नं चूडामणिं, येनेमं हृदये कृत्वा ज्वलनप्रवेशेन अपनयामि हृदयस्य सन्तापदुःखम्।

(१७) महाराज! तत् किमस्माभिः प्रतिपाल्यते?

(म) आर्य्यपुत्रचिह्नम् आर्य्यपुत्रस्य स्मारकचिह्नभूतम्। ज्वलनप्रवेशेन अग्निप्रवेशेन; अग्निप्रवेशपूर्वकजीवनविसर्जनेनेति भावः।

(य) आकुलयसि व्याकुला भवसि। अयं निश्चयः अग्निप्रवेशेन हृदयसन्तापापनयनरूपः सङ्कल्पः।

(र) किम्? कथम्? प्रतिपाल्यते अपेक्ष्यते, समय इति शेषः, किं-निमित्तमधुनाऽप्यस्माभिर्विलम्ब्यते? इत्यर्थः।

(ल) किञ्चित् किमपि, प्रतिपाल्यते इति शेषः। आहिताग्नेः आहितः स्थापितः, अग्निः येन सः तस्य आग्निहोत्रिणः, साग्निकस्य इत्यर्थः। ("वाऽऽहिताग्न्यादिषु" (२।२।३७ पा०) इति आहितशब्दस्य पूर्वनिपातो वैकल्पिकः] अन्येन आहिताग्न्यतिरिक्तेन। संस्कारः अन्त्यक्रियाविशेषः, दाह इति यावत्। अग्निहोत्रशरणात् अग्निहोत्रगृहात्, ("शरणं गृहरक्षित्रोः" इत्यमरः)। उद्दीपयामः प्रज्वालयामः, दाहयाम इत्यर्थः।

खल्वनिश्चित्यैव युक्तमिदमीदृशं साहसमनुष्ठातुम्। सविचाराणि हि दैवविलसितानि। कदाचिन्नायं नाग इति ज्ञात्वा परित्यजेन्नागशत्रुः; तदनयैव दिशा (व) वैनतेयमनुसरामस्तावत्।

वृद्धा। सव्वहा देवदाणं पसादेण जीवंतस्स पुत्तअस्स मुहं दंसेम। (१८)

मल। [आत्मगतम्]। दुल्लहं क्खु एदं मम मंदभग्गाए। (१९)

जीमू। वत्स! अवितथैषा तव भारती भवतु। तथाऽपि साग्नीनामेवास्माकं युक्तमनुसर्तुम्; तदनुसरतु (श) भवान्, वयमप्यग्निशरणादग्निमादाय त्वरितमेवानुगच्छामः।

[पत्नी-वधूसमेतो निष्क्रान्तः]।

शङ्ख। तत् यावत् गरुडमनुसरामि। [अग्रतो निरूप्य]।—

कुर्वाणो रुधिरार्द्रचञ्चुकषणैर्द्रोणीरिवाद्रेर्नवाः
प्लुष्टोत्खातवनान्तरः स्वनयनज्योतिःशिखाश्रेणिभिः।
मज्जद्वज्रकठोरघोरनखरप्रान्तावगाढावनिः
शृङ्गाग्रे मलयस्य पन्नगरिपुर्दूरादसौ दृश्यते ॥ १३ ॥

(१८) सर्वथा देवतानां प्रसादेन जीवतः पुत्रस्य मुखं पश्यामः।

(१९) दुर्लभं खल्वेतत् मम मन्दभाग्यायाः।

(व) कृते निमित्तम्। उच्छिन्नं विनष्टम्। इदं कष्टं व्यवसितमित्यर्थः। ईदृशम् अग्निप्रवेशरूपम्। साहसम् अविमृश्यकारित्वम्। सविचाराणि विचारापेक्षीणि, विशेषं विमृश्य निश्चेतव्यानीत्यर्थः। दैवविलसितानि दैवविचेष्टितानि, विधिकृतदुर्विपाका इत्यर्थः। अनया दिशा रक्तधाराप्रदर्शितेन मार्गेणेत्यर्थः।

(श) अवितथा सत्या। भारती वाक्। साग्नीनाम् अग्निसहितानां, गृहीताग्नीनामित्यर्थः। अनुसरतु, वैनतेयमिति शेषः।

गरुडं वर्णयति, कुर्वाण इति।—रुधिरार्द्रयोः जीमूतवाहनरक्तसिक्तयोः, चञ्च्वोः कषणैः घर्षणैः, पुनः पुनरवलेखनैरित्यर्थः, अद्रेः पर्वतस्य सम्बन्धिनीः, पाषाणमयी-

[ ततः प्रविशत्यासनस्थः पुरःपतितनायको गरुडः ]।

गरुडः। आजन्मनः प्रभृति भुजङ्गपतीन् अश्नता नेदमाश्चर्यं मया दृष्टपूर्वं यत्, अयं महात्मा न केवलं न व्यथते !! प्रहृष्ट इव किमपि (घ) दृश्यते !! तथा हि—

ग्लानिर्नाधिकपीयमानरुधिरस्याप्यस्ति धैर्योदधे-
र्मांसोत्कर्तनजा रुजोऽपि वहतः प्रीत्या प्रसन्नं मुखम्।
गात्रं यन्न विलुप्तमेष पुलकस्तत्र स्फुटो दृश्यते
दृष्टिर्मय्युपकारिणीव निपतत्यस्यापकारिण्यपि॥ १४॥

---

रित्यर्थः, नवाः द्रोण्योरिव काष्ठाम्बुवाहिन्योरिव, मध्यनिम्नाश्मतोभयपार्श्वकाष्ठमयजल-सेचन्योरिवेत्यर्थः, ( "द्रोणी काष्ठाम्बुवाहिनी" इत्यमरः ) कुर्वाणः, तथा स्वस्य नयनयोः यत् ज्योतिः प्रभा, तस्य शिखाश्रेणिभिः अर्चिःसङ्घातैः, प्लुष्टं दग्धम्, उत्खातम् उन्मूलितञ्च, समूलं दग्धमिति भावः; वनान्तरं काननावकाशो येन तथाभूतः, तथा मज्जताम् अभ्यन्तरं प्रविशतां, वज्रकठोराणां घोराणां भीषणानां, सुतीक्ष्णानामिति यावत्, नखराणां प्रान्तैः अग्रैः, अवगाढा गभीरीकृता, निम्नीकृता वा, अवनिः पृथ्वी येन तथाविधः, असौ पन्नगानां नागानां, रिपुः गरुत्मान्, मलयस्य शृङ्गाग्रे दूरात् दृश्यते।
[ अत्र स्वभावोक्त्युपमयोः सापेक्षसङ्करः ]। शार्दूलविक्रीडितं वृत्तम्॥ १३॥

( घ ) भुजङ्गपतीन् नागश्रेष्ठान्, महासर्पानित्यर्थः। न केवलमिति।—केवलं न व्यथते न पीडामनुभवतीति न, व्यथते एव, तथाऽपि किमपि किञ्चित्, प्रहृष्ट इव दृश्यते, व्यथायास्त्वेऽपि हर्षोदय इत्याश्चर्यम्। यद्वा—केवलं न व्यथते इति न अपि तु व्यथां नानुभवत्येव, प्रत्युत प्रहृष्ट इवापि लक्ष्यते इत्यर्थः।

अव्यथस्यापि हर्षभावं विवृणोति ग्लानिरिति।—धैर्योदधेः धैर्यातिरेकैः हेतुभिः, अधिकं यथा तथा पीयमानं रुधिरं यस्य तादृशस्यापि, अस्य महात्मनः, ग्लानिः अवसादः, विषादभाव इत्यर्थः, नास्ति, ग्लानिकारणसत्त्वेऽपि ग्लानिर्नास्तीत्याश्चर्यमिति भावः; तथा मांसानाम् उत्कर्तनेन खण्डनेन, जायन्ते इति तज्जाताः मांसच्छेदभवाः, रुजः पीडाः, वहतः अपि प्राप्नुवतोऽपि, अनुभवतोऽपीत्यर्थः, अस्य मुखं, धैर्योदधेरिति अत्रापि अनुवर्तनीयम्; प्रीत्या सन्तोषेण, प्रसन्नं प्रफुल्लं, विषादो दूरमास्तामिति भावः; यत् गात्रं शरीरं, न विलुप्तं न विनष्टं, मया न खण्डितमिति यावत्, तत्र गात्रे, एषः केवलः, पुलकः रोमहर्षः, परप्राणरक्षणजनितानन्दोदयादिति भावः;

ततः कुतूहलमेव जनितमस्यानया धैर्य्यवृत्त्या। (ख) भवतु, न भक्षयाम्येवैनं, पृच्छामि तावत् कोऽयमिति।

नायकः। शिरामुखैः स्यन्दत एव रक्त-
मद्यापि देहे मम मांसमस्ति।
तृप्तिं न पश्यामि च ते महात्मन्!
किं भक्षणात् त्वं विरतो गरुत्मन्!? ॥ १५ ॥

गरुडः। [आत्मगतम्]। आश्चर्य्यमाश्चर्य्यम्!! कथम्!! अस्या-मप्यवस्थायामेवमूर्ज्जितमभिधत्ते!! (ग) [प्रकाशम्]।—

आवर्ज्जितं मया चञ्च्वा हृदयात् तव शोणितम्।
अनेन धैर्य्येण पुनस्त्वयाऽऽहृतमिवाद्य मे ॥ १६ ॥

तत् कस्त्वमिति श्रोतुमिच्छामि।

---

स्फुटः स्पष्टः, दृश्यते, तथा हृष्टः मेवम्, अपकारिणि आततायिनि अपि, मयि उप-कारिणीव कृतोपकारे इव, निपतति। [अत्र ग्लान्यादीनां कारणे सत्यपि तदभावात् विशेषोक्तिरलङ्कारः, उपकारिणीव इत्युत्प्रेक्षाऽलङ्कारश्च इत्यनयोः संसृष्टिः। शार्दूलविक्रीड़ितं वृत्तम् ॥ १४ ॥

(ख) धैर्य्यवृत्त्या धैर्य्यव्यवहारेण।

गरुडं भोजनानिस्पृहं दृष्ट्वा कारणपृच्छामुखेन निजमलौकिकमौदार्य्यं प्रकटयति, शिरेति।—अद्यापि इदानीमपि, पादवर्थेऽपि योजनीयमेतत; शिराणां मुखैः अग्र-भागैः, रक्तं स्यन्दते एव स्रवत्येव, मम देहे मांसम् अस्ति, ते तव, तृप्तिं परितोषञ्च, न पश्यामि, ("तृप्तिं न पश्यामि तथापि तावत्" इति पाठान्तरेऽपि स एवार्थः) अत एव हे महात्मन्! गरुत्मन्! त्वं किं कथं, भक्षणात् विरतः? निवृत्तः? रक्तादीनां सत्त्वात् त्वया इदानीमेव न निवर्त्तितव्यम्, अपि तु यथेष्टमेव भोक्तव्य-मिति भावः। एष श्लोकः साहित्यदर्पणे दयावीरस्य उदाहरणरूपेण प्रदर्शितः। [अत्र भक्षणनिवृत्तेः कारणाभावेऽपि तदुत्पत्तेः विभावनाऽलङ्कारः, एवं भक्षण-विरामाभावस्य हेतौ वर्त्तमानेऽपि तदभावकथनात् विशेषोक्तिः, तत् एतयोः सन्देह-सङ्कराऽलङ्कारः]। उपजातिर्वृत्तम ॥ १५ ॥

(ग) ऊर्ज्जितम् उत्साहातिशयपूर्णम्। ("ऊर्ज्जस्तु कार्त्तिकोत्साह बलेषु प्राणनेऽपि च" इति मेदिनी) अभिधत्ते कथयति।

आवर्ज्जितमिति।—मया चञ्च्वा तव हृदयात् वक्षसः, शोणितम् आवर्ज्जितम्

नायकः। एवं क्षुदुपहतो न आवरणयोग्यस्त्वम्। कुरुष्व तावत् मम मांसशोणितेन (क) तृप्तिम्।

शङ्खचूडः। [सहर्षमुपसृत्य]। तार्क्ष्य! न खलु न खलु साहसमनुष्ठेयम्। नायं नागः। परित्यज्यैनम्। मां भक्षय; अहं तवाहारार्थं प्रेषितोऽस्मि वासुकिना। [उरो ददाति]। (ख)

नायकः। [शङ्खचूडं दृष्ट्वा]। कष्टम्!! विफलीभूतो मे मनोरथः शङ्खचूडेनागच्छता।

गरुडः। [उभौ निरूप्य]। द्वयोरपि भवतोर्वध्यचिह्नम्। कः खलु नाग इति नावगच्छामि।

शङ्खचूडः। स्थाने एव भ्रान्तिः। (ग)—

आस्तां स्वस्तिकलक्ष्म वक्षसि तनौ नालोक्यते कञ्चुकः?
जिह्वे जल्पत एव मे न गणिते नाम त्वया द्वे अपि?।

---

आहृतम्, आक्रम्य पीतमित्यर्थः, त्वया पुनः त्वया तु, अनेन धैर्येण एतदवस्थायामपि अभोज्यत्वरूपेणेति भावः; अद्य मे मम, आहृतमिव, शोणितमिति शेषः। [अत्रातिशयोक्तिमूला उत्प्रेक्षा]। ॥ १६ ॥

(क) क्षुदुपहतः क्षुधाभिपीडितः। न आवरणयोग्यः न आवारयितव्यः, मयेति शेषः। [मांसशोणितेनेति प्राण्यङ्गत्वात् एकवद्भावः]।

(ख) न खलु न खलु नैव नैव, [सम्भ्रमे द्विरुक्तिः]। उरः वक्षःस्थलम्। ददाति अर्पयतीत्यर्थः, गरुडसमीपमिति शेषः; वक्षोविदारणार्थमिति, स्वस्यैव नागत्वनिश्चायकस्वस्तिकचिह्नादिप्रदर्शनार्थमिति वा भावः।

(ग) स्थाने एव युक्तमेव। ("युक्ते द्वे साम्प्रतं स्थाने" इत्यमरः) भ्रान्तिः उभयोर्मध्ये वध्यत्वनिर्णये भ्रमः। सोल्लुण्ठनोक्तिरियम्; भ्रमस्ते युक्तायुक्त एव इत्यर्थः; भ्रमस्ते अयुक्तमेवेत्याशयः; यद्वा—स्थाने एवं सादृश्ये एव, सदृशवस्तुनि एवेत्यर्थः, ("स्थाने तु कारणार्थे स्यात् युक्त-सादृश्ययोरपि" इति मेदिनी) भ्रान्तिः, जायते इति शेषः, सदृशदर्शने एव भ्रान्तिर्जायते, अत्र तु सादृश्यमेव नास्ति, कुतः भ्रान्तेरवसरः? इति भावः।

भ्रान्तेरस्थानत्वं प्रतिपादयति, आस्तामिति।—वक्षसि स्वस्तिकलक्ष्म स्वस्तिकं नाम नागचिह्नविशेषः, तदेव लक्ष्म लक्षणम्, आस्तां तिष्ठतु दूरत्वात् स्वस्तिकाभिज्ञानस्य

तिस्रस्तीव्रविषाग्निधूमपटलव्याजिह्मरत्नत्विषो
नैता दुःसहशोकसीत्कृतमरुत्पीडाः फणाः पश्यसि ? ॥ १७ ॥

गरुडः। [ उभौ निरूप्य शङ्खचूडस्य फणां दृष्ट्वा ]। तत् कः खलु मया व्यापादितः ?

शङ्ख। विद्याधरवंशतिलको जीमूतवाहनः। कथमकारुणिकेन त्वया इदमनुष्ठितम् ?

गरुड। [ स्वगतम् ]। कथमनुष्ठितम् ? ( घ ) अयं विद्याधरकुमारो जीमूतवाहनः !!

मेरौ मन्दरकन्दरासु हिमवत्सानौ महेन्द्राचले
कैलासस्य शिलातलेषु मलयप्राग्भारभागेष्वपि ।

---

किमपि प्रयोजनं नास्ति इत्यर्थः, तनौ शरीरे, ममेति शेषः, कञ्चुकः निर्मोकः, सर्पत्वगित्यर्थः, ("खोलोस" इति यस्य प्रसिद्धिः) न आलोक्यते ? न दृश्यते ? त्वयेति शेषः ; का वा अन्यसूत्राचिह्नदर्शनस्येत्यर्थः; काका प्रतीयते, एवमुत्तरत्रापि ; कस्यचित् अन्यस्यापि वर्णस्य स्वस्तिकचिह्नस्य सद्भावः सम्भाव्यते, निर्मोकस्तु नागं विना कस्यापि प्राणिनः न भवतीति भावः ; किञ्च, त्वया जल्पतः एव वाचालपतोऽपि, एवकारोऽत्र अप्यर्थे, न तु तूष्णीमवस्थितस्य इत्यर्थः, तथात्वे जिह्वादर्शनाभावादिति भावः ; मे द्वे जिह्वे अपि न गणिते नाम ? न लक्षिते नाम ? नाम इति विमर्शे ; जल्पतो मे जिह्वाद्वयं त्वया सुस्पष्टमेव दृश्यते, तथाऽपि मम नागत्वे ते भ्रान्तिः ? इत्यहो ! इति भाव ; तथा तीव्रेण तीक्ष्णेन, दारुणेनेत्यर्थः, विषाग्नेः धूमपटलेन धूमनिचयेन, व्याजिह्माः मन्दीभूताः, अन्यर्थे मलिनीभूता इत्यर्थः, ("जिह्मस्तु कुटिले मन्दे" इति हेमः) रत्नानां मणीनां, त्विषः कान्तयः यासां तथोक्ताः, तथा दुःसहेन सोढुमशक्येन, शोकेन जीमूतवाहनप्राणविनाशजनितेन इति भावः ; यत् सीत्कृतं सीत्कारः, तदेव मरुत् वायुः, कम्पनकारित्वादिति भावः ; तेन यः मरुत् सीत्कारसम्भूतः पवनः इत्यर्थो वा, तेन पीडा कम्पनरूपा व्यथा यासां तादृशीः, तिस्रः एताः परिदृश्यमानाः, फणाः न पश्यसि ? मम नागत्वाभिव्यञ्जकानामेव लक्षणानामेतेषां द्रष्टुरपि ते भ्रान्तिः सर्वथैवानुचिता इति भावः। [ अत्र काका अन्यार्थप्रतिपादनादर्थापत्तिरलङ्कारः, एवं विषाग्नि- सीत्कृतमरुदित्यादौ रूपकं, जल्पत इति पदार्थस्य जिह्वाद्वयदर्शनहेतुत्वात् काव्यलिङ्गालङ्कारस्य इत्येषां सङ्करः ]। शार्दूलविक्रीडितं वृत्तम् ॥ १७ ॥

( घ ) कथमनुष्ठितम् ? किं कृतमित्यर्थः, मयेति शेषः।

जीमूतवाहनस्य विश्वाशाविस्तृतत्वं वर्णयति, मेराविति।—मेरौ सुमेरुशैले, मन्द-

दिक्कुञ्जेषु च तेषु तेषु बहुशो यस्य श्रुतं तन्मया
लोकालोकविचारिचारणगणैरुद्गीयमानं यशः ॥ १८ ॥

सर्वथा महत्यंहःपङ्के (ङ) निमग्नोऽस्मि।

नायकः। भो फणिपते! किमेवमुद्विग्नोऽसि?

शङ्खः। किमस्थानमिदमावेगस्य? (च)—

स्वशरीरमिदं दत्त्वा तार्क्ष्यात् परिरक्षितं यदीयमिदम्।
युक्तं नेतुं भवतः पातालतलादपि तलं माम् ॥ १९ ॥

यस्य समुद्रमन्थने मन्थानदण्डभूतस्य पर्वतविशेषस्य, कन्दरासु गुहासु, हिमवतः हिमाचलस्य, सानौ प्रस्थे, महेन्द्राचले महेन्द्राख्यकुलपर्वते, कैलासस्य शिलातलेषु, मलयस्य तदाख्यस्य चन्दनपर्वतस्य, प्राग्भारभागेषु उत्कर्षयुक्तस्थानेषु, उत्कृष्टप्रदेशेषु इत्यर्थः; यद्वा—अग्रभागेषु, शिखरदेशेषु इत्यर्थः, ("प्राग्भारः उत्कर्षे पश्चाद्भागे पर्वताग्रभागे च" इति वाचस्पत्यमहाकोषः) अपि, तथा तेषु तेषु मया पुनः पुनः विचारितेषु सुपरिचितेषु इत्यर्थः, दिक्कुञ्जेषु दिशः कुञ्जाः इव लतादिपिहितमण्डपाकारस्थानानि इव तेषु, दिगन्तेषु इति यावत्, लोकालोके तदाख्यसूर्यालोकसम्पर्कसीमापर्वते, विचरन्तीति तच्छीलाः, ये चारणगणाः वैतालिकवर्गाः तैः, उद्गीयमानम् उच्चैर्गानविषयीक्रियमाणं कीर्त्यमानं, यस्य तत् प्रसिद्धं, यशः मया बहुशः पुनःपुनः, श्रुतं, सोऽयं विद्याधरकुमारो जीमूतवाहनः!! इति गद्यांशेनान्वयः। [अत्र एकस्य यशसः एकदानेकगोचरत्वात् विशेषालङ्कारः, तेन च जीमूतवाहनस्य लोकातिशायि-महत्त्वव्यञ्जनादुदात्तालङ्कारोऽपि, तदनयोः सङ्करः]। शार्दूलविक्रीडितं वृत्तम् ॥ १८ ॥

(ङ) सर्वथा सर्वप्रकारेण। अंहःपङ्के पापपङ्के, ("पापं किल्बिषकल्मषम्। कलुषं वृजिनैनोऽघमंहोदुरितदुष्कृतम्॥" इत्यमरः)।

(च) अस्थानम् अयोग्यस्थानम्, अविषयः इति यावत्। इदं मत्प्राण-रक्षार्थमात्मशरीरदानमित्यर्थः। आवेगस्य वैक्लव्यस्य, आवेगस्य विषय एवेति भावः।

आवेगहेतुं विवृणोति, स्वशरीरमिति।—इदं स्वशरीरं निजदेहं, दत्त्वा भक्ष्यार्थमुपायनीकृत्येत्यर्थः, तार्क्ष्यात् गरुडात्, यदीयं यस्य मम, इदं शरीरं, परिरक्षितं, त्वयेति शेषः, मां हीनादपि हीनं तं मामित्यर्थः, भवतः पातालतलात् अपि रसातलस्य निम्न-प्रदेशादपि, न तु केवलं पातालात्, तस्मादपि निम्नतः इत्यपिशब्दार्थः, तलम् अधःप्रदेशं, सर्वथा अन्धतमसाच्छन्नं स्थानमिति यावत्, नेतुं प्रापयितुं, युक्तम् उचितं, न तु पातालतलम्; इत्थं गर्हितोपायेन संरक्षितजीवितस्य मे जीवलोके मुखप्रदर्शनम्

[ ततः प्रविशति पत्नी-वधूसमेतो जीमूतकेतुः ]।

जीमू। [ सास्रम् ]। हा पुत्र जीमूतवाहन !—

आत्मीयः पर इत्ययं खलु कुतः सत्यं कृपायां क्रमः ?
किं रक्ष्या बहवः किमेक इति ते जाता न चिन्ता कथम् ?।
तार्क्ष्यात् त्रातुमहिं स्वजीवितपरित्यागं त्वया कुर्वता
येनात्मा पितरौ वधूरिति हतं निःशेषमेतत् कुलम् ॥२०॥

वृद्धा। [ तनयवतीमुद्दिश्य ]। जादे ! विरम मुहुत्तअं। अवि-रलणिवडंतबाप्पबिंदूहिं अहिहवीअदि ( ज ) अअं अग्गी। ( २० )

सर्वे [ परिक्रामन्ति ]

जीमू। हा पुत्र जीमूतवाहन !

---

( २० ) जाते ! विरम मुहूर्तम्। अविरलनिपतद्बाष्पबिन्दुभिरभिभूयतेऽयमग्निः।

आत्मीय इति।—कृपायां परस्मिन् अनुकम्पाप्रदर्शने, अयम् आत्मीयः स्वजनः, परः अनात्मीयः, अयमिति शेषः इति एवं, क्रमः नियमः, विचार इति भावः ; कुतः खलु ? खलु इति प्रश्नार्थेऽव्ययं, कुत्रापि नास्तीत्यर्थः, सत्यं सत्यमेतत्, कृपान्वितस्यात्म-परविचारो नास्तीति तथ्यमेवेत्यर्थः, किन्तु बहवः, प्राणिनः इति शेषः, रक्ष्याः रक्षणीयाः, किम् ? किम् एकः प्राणी, रक्ष्यः ? इति बहुनामेकपरित्यागेन अन्यतः कार्यः ; इति एवं, चिन्ता ते तव, कथं न जाता ? तार्क्ष्यात् गरुडात्, अहिं पन्नगम्, शङ्खचूडमिति शेषः, त्रातुं रक्षितुं, स्वजीवितपरित्यागम् एकं प्रति कृपया निजजीवनविसर्जनं, कुर्वता येन त्वया आत्मा स्वदेहः, पितरौ, वधूः पत्नी, इति, एतत्त्रयमिति शेषः, बहवः इति भावः ; अत एव निःशेषं यथा तथा, एतत् कुलं हतं नाशितम् ; तत्र ते चिन्ता कथं न जाता ? इति द्वितीयपादस्थ-वाक्येन सम्बन्धः। [ अत्र अहिं त्रातुं स्वजीवितं परित्यजतो देवात् पित्रादीनां हननरूपकार्यकरणात् विशेषालङ्कारः, "किञ्चित् प्रकुर्वतः कार्यमशक्यस्येतरस्य चेत्। कार्यस्य करणं दैवाद्विशेषस्त्रिविधः स्मृतः ॥" इति दर्पणकारलक्षणात् ]। शार्दूलविक्रीडितं वृत्तम् ॥ २० ॥

( ज ) जाते ! वत्से !। अभिभूयते मन्दीभूयते, निर्वाप्यते इति यावत्।

नायकः। भोः पक्षिराज! अलमनेनाध्यवसायेन, नायं प्रतीकारोऽस्य पाप्मनः।

गरुडः। [जानुभ्यां स्थित्वा कृताञ्जलिः]। भो महात्मन्! कस्तर्हि कथ्यताम्?

नायकः। प्रतिपालय क्षणमेकम्। पितरौ मे प्राप्तौ, यावदेतौ प्रणमामि।

गरुडः। एवं क्रियताम्।

जीमूः। [दृष्ट्वा सहर्षम्]। देवि! दिष्ट्या वर्द्धसे। अयं वत्सो जीमूतवाहनो न केवलं ध्रियते, प्रत्युत कृताञ्जलिना गरुडेन शिष्येणेव पर्य्युपास्यमानस्तिष्ठति। (ञ)

वृद्धा। महाराअ! कअत्थम्हि। अक्खदसरीरस्स मुहं पेक्खिस्सं। (२१)

मल। अहं अज्जउत्तं पेक्खिअ अदिपिअं त्ति कारिअ ण पत्तिआमि। (ट) (२२)

(२१) महाराज! कृतार्थाऽस्मि। अक्षतशरीरस्य मुखं प्रेक्षिष्ये।

(२२) अहमार्य्यपुत्रं प्रेक्ष्य अतिप्रियमिति कृत्वा न प्रत्येमि।

यावत्, तद्वत् भयङ्करे भयजनके, वाडवाग्नौ, जठरे प्रज्वलिते इति भावः; (यद्यपि "वाडवो वडवानलः" इत्यमरोक्तिः, तथाऽप्यत्र अग्निपदस्य नाधिकपदता, महाजनवाक्यत्वात्) पतामि आत्मानं निक्षिपामि, अहमिति शेषः। [अत्र प्रथमे पादे "यम-यम" इति यमकारस्य असकृदावृत्त्या तथा द्वितीये "ज-प" इत्येतयोरसकृदावृत्त्या वृत्त्यनुप्रासः, इवेति वाच्योत्प्रेक्षया संसृष्टः, तृतीयचतुर्थचरणयोरुपमा इत्येषां संसृष्टिः]। स्रग्धरा वृत्तम्॥ २१॥

(ञ) दिष्ट्या भाग्येन। ध्रियते तिष्ठति, जीवितो वर्त्तते इत्यर्थः। ["धृङ् स्थितौ" इति तौदादिकात् धृ धातोः लटि रूपम्] प्रत्युत वैपरीत्येन, परन्तु इत्यर्थः। पर्य्युपास्यमानः सेव्यमानः।

(ट) प्रत्येमि विश्वसिमि; अतिप्रणयास्पदस्य सदैवान्यथाशङ्कायाः स्वाभाविकत्वादिति भावः।

कौमु । [उपसृत्य] । वत्स ! एह्येहि, परिष्वजस्व (ठ) माम् ।

नायकः । [उत्थातुमिच्छन् पतितोत्तरीयो मूर्च्छति] ।

शङ्ख । कुमार ! समाश्वसिहि समाश्वसिहि ।

कौमु । हा वत्स ! कथं मां दृष्ट्वा परिष्वङ्गं (ड) गतोऽसि ?

वृद्धा । हा पुत्तअ ! कहं वाआमेत्तकेण वि तुए ण संभाविदम्हि ? (२३) (ढ)

मलय । हा अज्जउत्त ! कहं गुरुअणो वि दे (ण) ण पेक्खिदव्वो ? । (२४)

सर्वे । [मोहं गच्छन्ति] ।

शङ्ख । हा शङ्खचूडहतक ! कथं गर्भस्थ एव न विपन्नोऽसि, येनैवं क्षणे क्षणे मरणातिग (त) दुःखमनुभवसि ?

गरुडः । सर्वमिदं मम नृशंसस्य असमीक्ष्यकारितया विजृम्भितम् । (थ) तदेवं तावत् करोमि । [पक्षाभ्यां वीजयन्] । भो महात्मन् ! समाश्वसिहि समाश्वसिहि ।

(२३) हा पुत्रक ! कथं वाङ्मात्रेणापि त्वया न सम्भाविताऽस्मि ?

(२४) हा आर्यपुत्र ! कथं गुरुजनोऽपि ते न प्रेक्षितव्यः ?

(ठ) परिष्वजस्व आलिङ्ग ।

(ड) परिष्वङ्गम् आलिङ्गनं, आलिङ्गनमिति यावत् ।

(ढ) सम्भाविता सत्कृता, अर्चितेति यावत् ।

(ण) गुरुजनोऽपि पितरावपि, अनुकम्पनीयौ परिचारिकौ मां द्रष्टुं नार्हसि, परन्तु गुरुचरणशुश्रूषणव्रतस्य ते गुरुजनादर्शनं नोचितमित्यपि-शब्दार्थः । ते त्वया । [कृद्योगलक्षणा षष्ठी] ।

(त) शङ्खचूडहतक ! पापशङ्खचूड ! । विपन्नोऽसि मृतोऽसि । क्षणे क्षणे प्रतिक्षणम् । मरणातिगं मरणमतिगच्छति अतिक्रम्य वर्तते इति तादृशं, मृत्युयातनातोऽप्यधिकमित्यर्थः ; एतस्माद् दुःखात् मृत्युदुःखमपि वरमिति भावः ।

(थ) नृशंसस्य घातुकस्य, परद्रोहकारिण इत्यर्थः । (नृशंसो घातुकः क्रूरः

नायकः । [समाश्वस्य ] । गाङ्कूडु ! समाश्वासय गुरून् ।

अज्ञ । तात ! समाश्वसिहि समाश्वसिहि । अम्ब ! समाश्वसिहि समाश्वसिहि ।

उभौ । [समाश्वसितः ] ।

वृद्धा । पुत्तअ ! कहं पेक्खंताणं ज्जेव्व अम्हाणं (ट) कोटंतकुटणम्भ अवहरिअसि ? (२५)

कौम । देवि ! मैवममङ्गलवादिनी भव । म्रियते एवायुष्मान् ; तद्वधूः समाश्वास्यताम् ।

वृद्धा । [मुख वस्त्रेणावृत्य रुदती ] । पडिहदममंगलम् । णा दोसस्स । मलअवदि ! ममस्स । वच्छे ! उट्ठेहि उट्ठेहि । वरं एत्तिअं वेलं तुमं भत्तुणो मुहं पेक्ख । (२६) (थ)

मल । [समाश्वस्य ] । हा अज्जउत्त ! (२७)

वृद्धा । [मलयवत्या मुखं पिधाय ] । वच्छे ! मा एव्वं करेहि । पडिहदं क्खु एदं । (२८)

(२५) पुत्र ! कथं प्रेक्षमाणानामेवास्माकं कृतान्तहतकेनापह्रियसे ?

(२६) प्रतिहतममङ्गलम् । न दोषस्यापि । मलयवति ! समाश्वसिहि । वत्से ! उत्तिष्ठ उत्तिष्ठ । वरमेतस्यां वेलायां त्वं भर्तुर्मुखं प्रेक्षस्व ।

(२७) हा आर्यपुत्र !

(२८) वत्से ! मैवं कुरु । प्रतिहतं खल्वेतत् ।

पाप...(ः) अनभीष्टकारितायाः अविमृश्यकारितायाः । विक्रोशत विलसितम् ; फलमिति भावः ।

(ट) प्रेक्षमाणानामेवास्माकं पश्यतोऽस्माननादृत्येत्यर्थः । [अनादरे षष्ठी ] ।

(थ) प्रतिहतं अमङ्गलं, भवतु इति शेषः । वरं मनाक् प्रियं, यौवनेन न किमपि सिध्यति, तदपेक्षया यत् किञ्चित् कालं भर्तृमुखं द्रष्टुं शक्नोषि, अस्मिन्नवसरे पश्य तावत, यतः इतःपरं पुनर्द्रष्टुमर्हसि वा न वा इति भावः । यद्वा—वरं श्रेष्ठं सुन्दरमिति भावः; वरम् अभीष्टमिति वा, प्रियमित्यर्थः, [मुखमित्यस्य विशेषणम् ] ।

जीमू । [ साश्रमात्मगतम् ] ।—

विलुप्तशेषाङ्गतया प्रयाताम्
निराश्रयत्वादिव कण्ठदेशम् ।
प्राणांस्त्यजन्तं तनयं निरीक्ष्य
कथं न तापात् शतधा प्रयामि ? ॥ २२ ॥

मल । हा अज्जउत्त ! अदिदुक्करकारिणी ( न ) क्खु अहं, जा ईरिसं अज्जउत्तं पेक्खन्ती अज्जवि जीविअं ण परिच्चआमि । ( २९ )

वृद्धा । [ भावयव्याणि स्पृशन्ती गरुडमुद्दिश्य ] । णिसंस ! कहं दाणीं तुए एदं आरुहमाणणवजोव्वणसोहं तं ज्जेव्व ( प ) एदावत्थं पुत्तअस्स मे सरीरं किदम ? ( ३० )

( २९ ) हा आर्य्यपुत्र ! अतिदुष्करकारिणी खल्वहं, या ईदृशम् आर्य्यपुत्रं प्रेक्षमाणा अद्यापि जीवितं न परित्यजामि ।

( ३० ) नृशंस ! कथमिदानीं त्वया एतदारोहन्नवयौवनशोभं तदेवैतावदवस्थं पुत्रकस्य मे शरीरं कृतम् ?

जीमूतकेतोर्विलापमाह, विलुप्तेति ।—किञ्चन विलुप्तानि गरुडेन भक्षणात् विनष्टानि, किञ्चन शेषाणि अवशिष्टानि च विलुप्तशेषाणि, [ स्नातानुलिप्तवत् समासः ] विलुप्तात् शेषाणि इति वा विग्रहः, तादृशानि अङ्गानि अवयवा यस्य सः तस्य भावः तत्ता तया हेतुना, निराश्रयत्वात् हृदयरूपाधाराभावेन निरवलम्बनत्वादिव, कण्ठदेशं प्रयातान् समागतान्, प्राणान् त्यजन्तं तनयं पुत्रं, निरीक्ष्य अवलोक्य, तापात् व्यथाऽतिरेकात्, कथं शतधा शतखण्डत्वं, न प्रयामि ? न गच्छामि ?, शतखण्डो भूत्वा कथं न विदीर्य्ये ? इत्यर्थः । [ अत्र प्रथमार्द्धे इव-शब्दप्रयोगात् उत्प्रेक्षा, द्वितीयार्द्धे च शतधा विभेदरूपकार्य्यस्य प्राणत्यागकारिपुत्रदर्शनरूपहेतोः वाक्यगतत्वात् काव्यलिङ्गं, तदेतयोः संसृष्टिः ] । उपजातिः वृत्तम् ॥ २२ ॥

( न ) अति अतिशयेन, दुष्करं दुःसाध्य, कर्म्म शीलमस्याः सा तादृशी अतिदुष्करकारिणी, तवेदृशीमवस्थां दृष्ट्वा अधुनाऽपि प्राणधारणेन अतिदुःसाध्यकर्मकारिणी, अतिकठोरप्राणा इति यावत् ।

( प ) नृशंस ! निर्दय ! । आरोहदिति ।—आरोहतः उद्गच्छतः, नवयौवनस्य

नायकः। अम्ब! मा मैवम्। किमनेन कृतम्? ननु पूर्वमप्येतदीदृशमेव परमार्थतः। (फ) पश्य—

मेदोऽस्थिमांसमज्जाऽसृक्सङ्घातेऽस्मिंस्त्वचाऽऽवृते।
शरीरे वाऽस्ति का शोभा सदा बीभत्सदर्शने? ॥ २३ ॥

गरुडः। भो महात्मन्! नरकानलज्वालाऽवलीढमिव आत्मानं मन्यमानो दुःखं तिष्ठामि; तदुपदिश्यतां, येन मुच्येयमस्मादेनसः। (ब)

---

शोभा च व तादृशस्य शरीरस्य यौवनशोभा प्रवर्त्तमानानिलवशीवनरमणीयम्। तदेव अतिक्रमणीयतया प्रतिभातमेवेत्यर्थः।

(फ) पूर्वमपि जन्मन आरभ्य अपीत्यर्थः। एतत्, शरीरमिति शेषः। परमार्थतः तत्त्वतः। ईदृशम् एतदवस्थमेव, अशोभनदर्शनमेवेत्यर्थः।

तदेव दर्शयति, मेद इति।—मेदसां वसानाम्, अस्थ्नां कङ्कालानां, मांसानां पलानां, मज्ज्ञाम् अस्थिसाराणाम्, असृजां रुधिराणाञ्च, सङ्घातः सम्मेलनं यत्र तादृशे, एषां समष्टिरूपे इत्यर्थः, त्वचा चर्मणा, आवृते आच्छादिते, अत एव सदा बीभत्सं घृणितं, दर्शनं यस्य तादृशे, अस्मिन् शरीरे का वा शोभा अस्ति? नैव काऽपि शोभेत्यर्थः; अतोऽवामेध्यमेदोऽस्थ्यादीनां समष्टीभूतत्वादेतत् शरीरं सदैव बीभत्सदर्शनं, न पुनरमेनैवाधुनेदृशं कृतं, तत् कथमेनमधिक्षिपति जननी? इति भावः। अन्तिमकाले देहावस्था यथा मार्कण्डेयपुराणान्तर्गतहरिश्चन्द्रोपाख्यानवर्णनावसरे श्मशानवर्णनायां—"अर्द्धदग्धाः शवाः श्यामाः विकटद्युतिपङ्क्तयः। हसन्तीवाग्निमध्यस्थाः कायस्यास्य दशा त्वियम्॥" इति। निरिन्द्रियाणां प्राणिनां वचनन्तु यथा शान्तिशतके—"स्मराग्निप्रत्युत्थैर्घनविगलितपिण्डं स्तनभिया मुखं लालाक्लिन्नं पिबति चषकं सासवमिव। अमेध्ये कीटाद्रे पथि च रमते स्पर्शरसिको महामोहान्धानां किमिव रमणीयं न भवति?॥" इति। अत्र पूर्वार्द्धवाक्यार्थस्य बीभत्सदर्शनं प्रति, तस्य च शरीरशोभाऽभावं प्रति हेतुतया काव्यलिङ्गालङ्कारः; एवं शरीरकान्तिलक्षणवस्तुनः विशेषज्ञानाय शोभानिषेध आभाष्यते, तेन आक्षेपालङ्कारः,—"वस्तुनो वक्तुमिष्टस्य विशेषप्रतिपत्तये। निषेधाभास आक्षेपः—" इति लक्षणात् अनयोः सङ्करः ] ॥२३॥

(ब) नरकेति।—नरकानलस्य नरकवह्नेः, ज्वालाभिः शिखाभिः, अवलीढम् आस्वादितं, दग्धमित्यर्थः। येन यादृशेन प्रायश्चित्तेन। मुच्येयं त्यजेय। ("मुच्येयं" पाठस्तु चिन्त्यः, दैवादिकस्य मुच धातोरभावात्; "मुच्येऽहम्" इति

नायकः। अनुजानातु मां तातः, यावदस्य पापस्य प्रतिपक्षमुपदिशामि। (भ)

जीमू। वत्स ! एवं क्रियताम्।

नायकः। वैनतेय ! श्रूयताम्।

गरुडः। [ कृताञ्जलिः ]। आज्ञापय।

नायकः।—

नित्यं प्राणाभिघातात् प्रतिविरम कुरु प्राक्कृतस्यानुतापं
यत्नात् पुण्यप्रवाहं समुपचिनु दिशन् सर्वसत्त्वेष्वभीतिम्।
मग्नं येनात्र नैनः फलति परिणतं प्राणिहिंसासमुत्थं
येनैतद्वारिपूरे लवणकणमिव क्षिप्तमन्तर्ह्रदस्य ॥ २४ ॥

पाठस्तु साधीयान्, तत्र "तस्मात् मुच्ये यथा तात !" इत्यादिवत् कर्मकर्तरि प्रयोगः) एनसः पापात।

( भ ) अनुजानातु इत्यादि। प्रतिपक्षं विरुद्धपक्षं, नाशकत्वात् प्रभूतमिति यावत्, प्रायश्चित्तमिति भावः।

गरुडाय पापप्रतीकारोपायमुपदिशति, नित्यमिति।—नित्यं सततं, प्राणाभिघातात् परप्राणपीडनात्, नागवधादिति भावः; प्रतिविरम निवर्तस्व, [ अत्र "प्रति" इति पदप्रयोगो अधिकपदता दोषः ] प्राक् पुरा, इतःपूर्वमित्यर्थः, कृतस्य अनुष्ठितस्य, प्राणिहिंसनरूपस्य पापस्य इति शेषः, अनुतापं कुरु "महत् पापमनुष्ठितं, न पुनरेवं करिष्यामि" इत्येवं पश्चात्तापम् अनुभव इति भावः; सर्वेषु सत्त्वेषु जीवेषु, अभीतिम् अभयं, दिशन् ददत्, यत्नात् पुण्यप्रवाहं सुकृतसञ्चयं, समुपचिनु समाहर। येन येन उपायेन धर्मः स्यात् इति भावः, अत्र जगति, प्राणिहिंसासमुत्थं जीवहिंसाजनितं, परिणतं वृद्धिं गतं, फलोन्मुखमित्यर्थः, एतत् त्वया आचरितमिति भावः; एनः पापं, ह्रदस्य अन्तः अगाधजल-जलाशयमध्ये, ("तत्रागाधजलो ह्रदः" इत्यमरः) वारिपूरे जलप्रवाहे, क्षिप्तं लवणकणमिव लवणबिन्दुरिव, मग्नं विलीनं सत्, अदर्शनीभूतं सदिति यावत्, न फलति निरयादिकं फलं न उत्पादयतीत्यर्थः। [ अत्र त्वमिति कर्तृवाचकस्य बहुक्रियासु प्रयोगात् दोषकाण्डाः, सा च अगाधजलाशयमध्ये निक्षिप्तो लवणबिन्दुर्यथा

अपि च—

स्रस्तानापादलम्बान् घनतिमिरनिभान् केशपाशान् वहन्त्यः
सिन्दूरेणेव दिग्धैः प्रथमरविकरस्पर्शताम्रैः कपोलैः।
आयासेनालसाङ्ग्योऽप्यवगणितरुजः कानने चन्दनानाम्
अस्मिन् गायन्तु रागादुरगयुवतयः कीर्तिमेतां तवैव ॥ २७ ॥

("तोयोत्थितं तत् पुलिनम्" इत्यमरः) महत् विपुलाः बहवः ते, भोगनिवहैः शरीरसमूहैः उपलक्षितः, ("भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः" इत्यमरः) क्वचिदपि वलयितं मण्डलीकृतं, शरीरं येन तथोक्तः, अत एव कृता जनिता, आवर्तस्य जलभ्रमस्य, ("स्यादावर्तोऽम्भसां भ्रमः" इत्यमरः) भ्रान्तिः भ्रमः येन तथाभूतः, क्वचित् अपि च कूलात् कूलं व्रजन् गच्छन्, अत एव सेतुप्रतिसमः सेतुनिभश्च सन्, एकस्मात् तटात् अपरतटगमनकाले विपुलायतशरीरतया सेतुवत् प्रतीयमानः सन्नित्यर्थः, महोदन्वति महासमुद्रे, सुखं निर्भयमिति यावत्, तत् यथा तथा, विचरत् सञ्चरत्। [उपमाऽलङ्कारः]। शिखरिणी वृत्तम्—"रसै रुद्रैश्छिन्ना य म न स भ-ला गः शिखरिणी" इति लक्षणात् ॥ २६ ॥

स्रस्तानिति।—उरगाणां नागानां, युवतयः पत्न्यः, स्रस्तान् स्खलितान्, हर्षाति-शय्यात् शिथिलीभूतानित्यर्थः अत एव आ पादलम्बान् चरणपर्यन्तपतितान्, घनतिमिरनिभान् सान्द्रान्धकारप्रतिमान्, गाढकृष्णवर्णानिति भावः, केशपाशान् केशकलापान्, आ पादलम्बघनकृष्णभूतकेशसमूहानित्यर्थः, ("पाशस्तु मृगपक्ष्यादि-बन्धने। कर्णान्ते शोभनार्थः स्यात् कचान्ते निकरार्थकः। छात्रादन्ते च निन्दार्थः" इति हैमः। "पाशः पक्षश्च हस्तश्च कलापार्थाः कचात् परे" इत्यमरः। तथा "बालास्तु तत्पराः पाशो रचना भार उच्चयः। हस्तः पक्षः कलापश्च केशभूयस्त्व-वाचकाः॥" इति च) वहन्त्यः दधानाः, प्रथमानां नवोदितानां, रविकराणां सूर्यकिरणानां, यः स्पर्शः, तेन ताम्राः आरक्ताः तैः, अत एव सिन्दूरेण दिग्धैरिव लिप्तैरिव, कपोलैः गण्डस्थलैः उपलक्षिता इत्यर्थः, आयासेन श्रमेण, विहारजनितेनेति भावः, अलसानि मन्दक्रियाणि, श्रान्ततया कर्मापटूनीत्यर्थः, ("अलसा हंसपद्यां ना पादरोग-द्रुभेदयोः। क्रियाशक्ते त्रिषु" इति मेदिनी) अङ्गानि यासां तथोक्ताः अपि, अवगणिता अचिन्तिताः, रुजः पीडाः, श्रमजनिता इति भावः; याभिः तथाभूताः सत्यः, अस्मिन् चन्दनानां कानने रागात् अनुरागात्, तवैव,

नायकः। साधु महासत्त्व! साधु, अनुमोदामहे। सर्वथा दृढसमाधानो (क) भव। [शङ्खचूडं निर्दिश्य]। शङ्खचूड! त्वयाऽपि स्वगृहमिदानीं गम्यताम्।

शङ्ख। [निश्वस्य अधोमुखस्तिष्ठति]।

नायकः। [निश्वस्य मातरं पश्यन्]। (ख)—

उत्प्रेक्षमाणा त्वां तार्क्ष्य-चञ्चुकोटिनिपातितम्।
त्वद्दुःखदुःखिता नूनमास्ते सा जननी तव॥ २८॥

वृद्धा। [सास्रम्] धण्णा क्खु सा जणणी, जा गरुडमुह-पडिदस्स अक्खदसरीरस्स ज्जेव्व पुत्तअस्स (ग) मुहं पेक्खिस्सदि। (३१)

(३१) धन्या खलु सा जननी, या गरुडमुखपतितस्याक्षतशरीरस्यैव पुत्रकस्य मुखं प्रेक्षिष्यते।

एव शब्दस्य अन्ययोगव्यवच्छेदकत्वात् न कर्मेति भावः; पुनः नागेषु अभयदानरूपां, कीर्तिं गायन्तु कीर्तयन्तु। [अत्र सिन्दूरेणैवेति इव शब्दबलात् वाच्योत्प्रेक्षा-ऽलङ्कारः, घनतिमिरनिभामित्यत्र चोपमाऽलङ्कार इत्यनयोः संसृष्टिः]। स्रग्धरा वृत्तम्॥ २७॥

(क) अनुमोदामहे अनुमन्यामहे। दृढं समाधानम् अङ्गीकारः यस्य तादृशः, सत्यप्रतिज्ञ इत्यर्थः। ("अङ्गीकाराभ्युपगम-प्रतिश्रवसमाधयः" इत्यमरः)।

(ख) मातरं पुत्रस्य नष्टाशङ्कया विक्लवां जननीमिति भावः।

स्वमातुर्वैक्लव्यदर्शनेन शङ्खचूडजनन्याः वैक्लव्यमनुमिनोति, उत्प्रेक्षमाणेति।—सा तव जननी त्वां तार्क्ष्येण गरुडेन, चञ्चुकोट्या चञ्च्वग्रे, निपातितं निक्षिप्तं, गरुडेनोत्कृत्तमित्यर्थः, चञ्चुकोट्या चञ्च्वग्रेण, चञ्चुप्रहारेणेत्यर्थः निपातितं विनाशित-मिति वा; यद्वा—तार्क्ष्यस्य चञ्चुकोट्या निपातितं भक्षणाय निक्षिप्तमित्यर्थः, ज्ञातुमिच्छतीति शेषः, उत्प्रेक्षमाणा कल्पयन्ती, सा एव नूनं निश्चितं, तव दुःखेन शोकेन, दुःखिता पीडिता, आस्ते तिष्ठति; अथवा—नूनं मन्ये इत्युत्प्रेक्षा; अतः त्वरितं त्वया माता आश्वासनीयेति भावः। [उत्प्रेक्षाऽलङ्कारः]॥ २८॥

(ग) पुत्रकस्य सुतकस्य। [स्वार्थे कः]। सु-पुत्रो हि मातुरतीव स्नेह-भाजनं भवति।

वृद्ध। वत्स! सत्यमेवैतत्, यदि कुमारः स्वस्थो भविष्यति। (घ)

नायकः। [वेदनां नाटयन्]। अहह! परार्थसम्पादनरसाक्षेपाटेतावतीं वेलां मया न लक्षिताः; सम्प्रति तु मां बाधितुमारब्धा मर्मच्छेदिन्यो वेदनाः। [अवस्थावस्था नाटयति]। (ङ)

कौमु। [ससम्भ्रमम्]। हा वत्स! किमेवं करोषि? (च)

वृद्धा। हा! किं णु क्खु एव्वं वदादि? [उरस्ताडम्]। परित्तायध परित्तायध। एसो क्खु मे पुत्तओ विवज्जइ। (३२) (छ)

मल। हा अज्जउत्त! परिच्चइदुकामो (ज) विअ लक्खीअसि। (३३)

(३२) हा! किं नु खल्वेवं वदति? परित्रायध्वं परित्रायध्वम्। एष खलु मे पुत्रको विपद्यते।

(३३) हा आर्य्यपुत्र! परित्यक्तुकाम इव लक्ष्यसे।

(घ) यदि कुमारः स्वस्थो भविष्यति, तदा भवत्या उक्तमेतत् सत्यमेव भविष्यतीत्यर्थः; कुमारस्य किमप्यहितं भवेच्चेत्, नाहं प्राणान् धारयिष्यामीति भावः।

(ङ) नाटयन् अभिनयन्। परार्थेति।—परार्थस्य परकार्य्यस्य, नागप्राणरक्षणरूपस्य इति भावः, सम्पादने संसाधने, यो रसः अनुरागः, तस्य आक्षेपात् आकर्षणात्, विषयान्तरेभ्यः चित्तस्य व्यावर्त्तनादित्यर्थः। ("आक्षेपो भर्त्सनाऽऽकृष्टकाव्यालङ्कारेषु स्मृतः" इति विश्वः) लक्षिताः गणिताः, अनुभूता इति यावत्, वेदना इत्यनेनान्वयः। [वेलामिति "कालाध्वनोरत्यन्तसंयोगे" (२।३।५ पा०) इति द्वितीया।] बाधितुं पीड़ायितुम्। मर्मच्छेदिन्यः अरुन्तुदाः। नाटयति अभिनयति।

(च) ससम्भ्रमं सभयं, सादरं, सत्वरं वा, ("सम्भ्रमः साध्वसेऽपि स्यात् संवेगादरयोरपि" इति मेदिनी, "त्वरा सम्भ्रमः" इत्यमरः)।

(छ) नु प्रश्ने। खलु अनुनये। उरस्ताड़ं वक्षःस्थलं ताड़यित्वा। परित्रायध्वं, मम पुत्रमिति शेषः। [आभीक्ष्ण्ये द्विर्वचनम्]। विपद्यते म्रियते।

(ज) परित्यक्तुकामः, अस्मानिति शेषः।

नायकः। [अञ्जलिं कर्त्तुमिच्छन्]। शङ्खचूड! समानय (झ) मे हस्तौ।

शङ्ख। [तथा कुर्वन्]। कष्टम्!! अनाथीभूतं (ञ) जगत्।

नायकः। [अर्द्धोन्मीलितचक्षुः पितरं पश्यन्]। तात! अम्ब! अयं मे पश्चिमः (ट) प्रणामः,—

गात्राण्यमूनि न वहन्ति सचेतनत्वं
श्रोत्रं स्फुटाक्षरपदां न गिरं शृणोति।
कष्टं निमीलितमिदं सहसैव चक्षुः
हा तात! यान्ति विवशस्य ममासवोऽमी॥ २९॥

[अथवा—"संरक्षता पन्नगम—" (ठ) इत्यादि पठित्वा पतति]।

वृद्धा। हा पुत्त! हा वच्छ! हा गुरुअणवच्छल! कहिं सि? देहि मे पडिवअणं। (३४)

(३४) हा पुत्र! हा वत्स! हा गुरुजनवत्सल! क्वासि? देहि मे प्रतिवचनम्।

(झ) समानय संयोजय।

(ञ) तथा कुर्वन् करौ संयोजयन्। अनाथीभूतं नाथशून्यं कृतं, मयीति शेषः।

(ट) पश्चिमः चरमः, शेषः इत्यर्थः।

पश्चिमप्रणामत्वे कारणं विवृणोति, गात्राणीति।—अमूनि एतानि, गात्राणि अङ्गानि, ममेति शेषः, सचेतनत्वं सम्बित्त्वं, स्पर्शज्ञानादिचेतनालक्षणवत्त्वमित्यर्थः, न वहन्ति नानुभवन्तीत्यर्थः, अवयवानि अवसन्तीति यावत्,· श्रोत्रं श्रवणेन्द्रियं, स्फुटानि सुव्यक्तानि, अक्षरपदानि सुप्तिङन्तवर्णसमुदायाः यस्यां तादृशीम्, अपीति शेषः, गिरं वाचं, न शृणोति, कष्टम् इति खेदे, इदं चक्षुः सहसैव निमीलितं मुद्रितं, भवतीति शेषः, हा तात! विवशस्य व्यथया आकुलीभूतस्य, मम अमी असवः प्राणाः, यान्ति निर्गच्छन्ति। [काव्यलिङ्गमलङ्कारः]। वसन्ततिलकं वृत्तम्॥ २९॥

(ठ) चतुर्थेऽङ्के १११ पत्राङ्के श्लोकोऽयं पठितः।

जीमू० । हा वत्स जीमूतवाहन ! हा प्रणयिजनवल्लभ ! हा सर्वगुणनिधे ! क्वासि ? देहि मे प्रतिवचनम् । [ इत्यु-पविश्य ] । ( ड ) कष्टं भोः कष्टम् !!—

निराधारं धैर्य्यं कमिव शरणं यातु विनयः ?
क्षमः क्षान्तिं वोढुं क इह ? विरता दानपरता ।
हतं सत्यं सत्यं व्रजतु च कृपा क्वाद्य कृपणा ?
जगज्जातं शून्यं त्वयि तनय ! लोकान्तरगते ॥ ३० ॥

मल० । हा अज्जउत्त ! कहं परिच्चइअ गदोऽसि ? अदि-णिग्घणे ( ढ ) मलअवदि ! किं तुए पेक्खिदव्वं ? जा एत्तिअं वेलं जीविआमि । ( १५ )

( १५ ) हा आर्यपुत्र ! कथं परित्यज्य गतोऽसि ? अतिनिर्घृणे मलयवति ! किं त्वया प्रेक्षितव्यम् ? या एतावद्वेलां जीवितासि ।

---

( ड ) उरस्ताड्य ऊर्ध्वमुन्नीय ; शोकव्यञ्जकं चेष्टा इत्यवगन्तव्यम् ।

विलापमाह, निराधारमिति ।—हे तनय ! त्वयि लोकान्तरगते परलोक-प्रस्थिते सति, धैर्य्यं धीरत्वं, निराधारं निराश्रयं, जातमिति शेषः ; न कमपीदानीं धैर्य्यमाश्रयतीति भावः ; विनयः प्रश्रयः, कमिव कं वा जनं, शरणं रक्षितारम्, आश्रयदातारमित्यर्थः, ( "शरणं गृहरक्षित्रोः" इत्यमरः ) यातु ? गच्छतु ? न कमपी-त्यर्थः ; इह अस्मिन् जगति, क्षान्तिं क्षमां, वोढुम् आश्रयितुं, कः क्षमः ? शक्तः ? न कोऽपीत्यर्थः ; दानपरता वदान्यता, विरता रहिता, दातृत्वमपि जगतः विलुप्तं भवेदित्यर्थः ; सत्यं तथ्यं, सत्यं निश्चितमेव, हतं विनष्टम् ; कृपणा दीना, शोच्या इत्यर्थः, कृपा दया च, क्व कुत्र, व्रजतु ? गच्छतु ? किं बहुना, अद्य जगत् शून्यं जातम् ; सर्वगुणरत्नशालिनस्तव विरहेण सारवदाधेयाभावादिति भावः । जगत्यस्मिन् त्वमेक एव धीरो विनीतः क्षमावान् दानशीलः सत्यपरः करुणार्द्रचेताः सर्वगुणालङ्कृतः आसीः, आश्रयाभावात् धैर्य्यादयो गुणा अपि त्वयैव सह लोकादस्मात् विलुप्ता भवेयुः ; एवञ्च एकस्य तवैवाभावे जगदिदं शून्यं जातमित्यहो ! इति निष्कर्षः । [ अत्र जगतः शून्यतां प्रति लोकान्तरगतिरूपपदार्थस्य हेतुत्वेनोत्कीर्त्तनात् पदार्थहेतुकं काव्यलिङ्ग-मलङ्कारः ] शिखरिणी वृत्तम् ॥ ३० ॥

( ढ ) अतिनिर्घृणे ! अतिनिष्करुणे ! ( "जुगुप्साकरुणे घृणा" इत्यमरः ) ।

शङ्ख। हा कुमार ! कथं प्राणेभ्योऽपि वल्लभं जनं परित्यज्य गम्यते ? तदवश्यमन्वेति ( ण ) त्वां शङ्खचूडः ।

गरुडः। कष्टम् !! उपरतोऽयं ( त ) महात्मा । तत् किमिदानीं करोमि ?

वृद्धा। [ नभमूर्द्धमवलोक्य ]। भअवंतो लोअवाला ! कहंवि अमिदेण सिंचिअ पुत्तअं मे जीआवेहि। ( ३६ )

गरुडः। [ सहर्षमात्मगतम् ]। अये ! अमृतसङ्कीर्त्तनात् साधु स्मृतम् । मन्ये, प्रनष्टमयशः । तत् यावत् त्रिदशपतिमभ्यर्थ्य तद्विसृष्टेनामृतवर्षेण न केवलं जीमूतवाहनम्, एतानपि पूर्वं-भक्षितानशेषानुरगपतीन् प्रत्युज्जीवयामि । यदि न ददात्यसौ ( थ ) तदाऽहं—

पक्षैः पीत्वाऽम्बुनाथं द्रुततरजवनैः प्रेर्यमाणः समीरैः
नेत्राग्निप्लोषमूर्च्छाविधुरविनिपतत्सानलद्वादशार्कः ।

( ३६ ) भगवन्तो लोकपालाः ! कथमप्यमृतेन सिक्त्वा पुत्रकं मे जीवय ।

( ण ) अन्वेति अनुसरति ।

( त ) उपरतः मृतः ।

( थ ) नायकमरणेन किंकर्त्तव्यविमूढस्य गरुडस्य "अमृतेन सिक्त्वा" इत्यत्र अमृतशब्दं श्रुत्वा सुधाकुण्डामृतप्रभावस्य, अमृतसेचनेन मृतनायकस्य प्राणानवश्यमेव प्रत्यानेष्यामि इति निश्चयात् अत्र हर्षोदयो बोध्यः । अमृतसङ्कीर्त्तनात् अमृत इति शब्दोल्लेखात् । स्मृतं, मयेति शेषः । मन्ये सम्भावयामि । प्रनष्ट विलुप्तम् ; जीमूतवाहनस्य प्रत्युज्जीवनेन इति भावः । त्रिदशपतिं देवराजम् । अभ्यर्थ्य याचित्वा । तद्विसृष्टेन तद्दत्तेन । अमृतवर्षेण अमृतवर्षणेन । न ददाति, अमृतमिति शेषः । असौ देवराजः ।

देवराजेन अमृतालाभे स्वनिश्चयं विज्ञापयति, पक्षैरिति ।—द्रुततराः समर्थतराः, जवना वेगवन्तश्च ते, अत एव समीरैः पवनसदृशैः, पवनसदृशाशुगमनसमर्थैरिति यावत्, पक्षैः प्रेर्यमाणः उह्यमानः सन् इत्यर्थः, पक्षैरेव तत्र तत्र गत्वा इति

चञ्च्वा सञ्चूर्ण्य शक्राशनि-धनदगदा-प्रेतनाथोग्रदण्डान्
आजौ निर्जित्य देवान् क्षणममृतमयं वर्षमभ्युत्सृजामि ॥२१॥

तदयं गतोऽस्मि ।

[ इति साटोपं ( ट ) परिक्रम्य निष्क्रान्तः ]।

वृद्धः। वत्स शङ्खचूड! किमद्यापि क्षीयते? समाहृत्य दारूणि पुत्रस्य मे विरचय चिताम्; ( ठ ) येन वयमप्यनेन सहैव गच्छामः।

वृद्धा। पुत्त संखचूड! लहुं सज्जेहि! दुक्खं, अम्हेहिं विणा भाउणो दे चिट्ठदि। ( १७ ) ( ड )

शङ्ख। [ सास्रम् ]। यदाज्ञापयन्ति गुरवः। नन्वग्रग ( ढ ) एवाहं युष्माकम्। [ इत्याथ चितारचनां कृत्वा ]। तात! अम्ब! सज्जीकृतेयं चिता।

( १७ ) पुत्र शङ्खचूड! लघु सज्जय। दुःखम्, अस्माभिर्विना भ्राता ते तिष्ठति।

भावः, अम्बुनाथं समुद्रं, पीत्वा, तथा नेत्राग्निना वाडवेन प्रज्वालितदिगन्तज्योतिषा, यः ग्रीष्मः दाहः, तेन या मूर्च्छा मोहः, तया विधुराः विकलाः सन्तः, विनिपतन्तः स्वस्थानात् भ्रश्यन्तः, मानवाः नागकाः, द्वादश अर्काः सूर्याः यस्य तथाभूतः, अहमिति गरुडोक्तवाक्येनान्वयः, चञ्च्वा शक्रस्य इन्द्रस्य, अशनिः वज्रं धनदस्य कुबेरस्य, गदा, प्रेतलोकनाथस्य यमस्य दण्डः तान्, सञ्चूर्ण्य भङ्क्त्वा, आजौ युद्धे, देवान् निर्जित्य पराभूय, क्षणम् अमृतमयं वर्षं वृष्टिम्, अभ्युत्सृजामि करोमीत्यर्थः। [ एवमुक्तकार्यकरणे गरुडस्य विद्यमानशक्तित्वात् "सिन्धुमपि शोषयामि" इत्यादिवत् अत्र न लोट्। अत्र असम्बन्धे सम्बन्धरूपातिशयोक्तिरलङ्कारः ]। स्रग्धरा वृत्तम् ॥ २१ ॥

( ट ) साटोपं सदर्पम्।

( ठ ) क्षीयते? किमर्थं तूष्णीमास्यते?। दारूणि काष्ठानि। विरचय सज्जीकुरु। चितां शवदाहार्थकाष्ठचयम्।

( ड ) लघु शीघ्रम्। दुःखं क्लेशकरम्, एतत् यदिति शेषः। भ्राता ते जीमूतवाहन इति भावः; तव अस्माकं पुत्रभूतत्वादित्याशयः।

( ढ ) अग्रगः पुरोगामी, अग्रे एवाहं चितायां स्वजीवनं विसृजामीति भावः।

जीमू। देवि ! किमपरं (फ) कथ्यते ? तदुत्तिष्ठ, चितायामारोहामः ।

सर्वे। [ उत्तिष्ठन्ति ]।

मल। [ बद्धाञ्जलिरूर्ध्वं पश्यन्ती ]। भअवदि गोरि ! तुए आणत्तं, जहा—"विज्जाहरचक्कवट्टी भट्टा दे भविस्सदि" त्ति, ता कहं मम मंदभग्गाए किदे तुमं अलीअवअणा संवुत्ता ? (ब) (१८)

[ ततः प्रविशति ससम्भ्रमा गौरी ]।

गौरी। महाराज ! जीमूतकेतो ! न खलु साहसमनुष्ठातव्यम् ।

जीमू। अये ! कथम् !! अमोघदर्शना गौरी !! (भ)

गौरी। [ मलयवतीमुद्दिश्य ]। वत्से ! कथमहमलीकवादिनी भवेयम् ? [ नायकमुपसृत्य कमण्डलुजलेनाभ्युक्ष्य ]। (म)—

निजेन जीवितेनापि जगतामुपकारिणः ।
परितुष्टाऽस्मि ते वत्स ! जीव जीमूतवाहन ! ॥ १२ ॥

नायकः। [ उत्तिष्ठति ]।

(१८) भगवति गौरि ! त्वया आज्ञप्तं, यथा—"विद्याधरचक्रवर्त्ती भर्त्ता ते भविष्यति" इति ; तत् कथं मम मन्दभाग्यायाः कृते त्वमलीकवचना संवृत्ता ?

---

(फ) अपरं नास्ति परं यस्मात् तत् तादृशम्, एतादृशमधिकमित्यर्थः ; अधुनाऽपौत्पर्थो वा ।

(ब) बद्धाञ्जलिः कृताञ्जलिः । आज्ञप्तम् आदिष्टम् । कृते निमित्तं, मम दुरदृष्टजन्यमित्यर्थः । अलीकवचना मिथ्यावादिनी ।

(भ) अये ! इति सम्भ्रमार्थकमव्ययम् । अमोघदर्शना अमोघम् अव्यर्थं, दर्शनं यस्याः सा, दृं स्मृतपूर्वेण सार्थकदर्शनेत्यर्थः । गौरी देवी कात्यायनी ।

(म) अभ्युक्ष्य आभिषिच्य ।

निजेनेति ।—हे वत्स ! जीमूतवाहन ! निजेन जीवितेन अपि स्वजीवनपरित्यागेनापि, जगताम् उपकारिणः हितकर्त्तुः, ते तव, परितुष्टाऽस्मि प्रीताऽस्मि, जीव तेन त्वं प्राणिहि । [ अत्र देव्याः परितुष्टित्वे निजजीवनव्ययेनापि जगदुपकारकारकत्वरूपस्य वाक्यस्य हेतुत्वात् काव्यलिङ्गमलङ्कारः ] ॥ १२ ॥

जीमूः। [सहर्षम्]। देवि! दिष्ट्या वर्द्धसे। प्रत्युज्जीवितो वत्सः।

वृद्धा। भअवदीए पसादेण। (३८)

नायकः। [गौरीं दृष्ट्वा बद्धाञ्जलिः]। अये! कथम्!! अमोघदर्शना भगवती!!—

अभिलषिताधिकवरदे! प्रणिपतितजनार्त्तिहारिणि! शरण्ये!।
चरणौ नमाम्यहं ते विद्याधरवन्दिते! गौरि!॥ ३३॥

[इति गौर्य्याः पादयोः पतति]।

सर्वे। [ऊर्द्ध्वं पश्यन्ति]।

जीमूः। अये! कथमनभ्रा (य) वृष्टिः!! भगवति! किमेतत्?

गौरी। राजन् जीमूतकेतो! जीमूतवाहनं प्रत्युज्जीवयितुम् एतांश्चास्थिशेषानुरगपतीन् समुपजातपश्चात्तापेन पक्षिपतिना देवलोकात् (र) इयममृतवृष्टिः पातिता। [अङ्गुल्या निर्दिश्य]। किं न पश्यति भवान्?—

(३८) भगवत्याः प्रसादेन।

अभीति।—अभिलषितं वाञ्छितम्, अधिकं बहुलं, वरं ददातीति तत्सम्बोधने, ["आतोऽनुपसर्गे कः" (३।२।३ पा०) इति ददातेः कः] तथा प्रणिपतितानां प्रह्वीभूतानां, जनानाम् आर्त्तिहारिणि! क्लेशनाशिनि!, शरण्ये! शरणागतवत्सले!, विद्याधरैः देवयोनिविशेषैः, वन्दिते! स्तुते!, पूजिते इत्यर्थः, हे गौरि! अहं ते तव, चरणौ नमामि। [अत्र चतुर्भिर्विशेषणैरभीष्टसिद्धिशरणागतत्राणाद्यभिप्रायगर्भैः काव्यार्थस्य पुष्टत्वावश्यकर्त्तव्यता प्रतीयते इति परिकरालङ्कारः]। आर्य्या वृत्तम्॥ ३३॥

(य) अनभ्रा नास्ति अभ्रं मेघो यत्र तादृशी, मेघनिरपेक्षा इत्यर्थः, ("अभ्रं मेघो वारिवाहः" इत्यमरः)।

(र) अस्थिशेषान् अस्थिमात्रावशिष्टान्। समुपजातः समुदितः, पश्चात्तापः

सम्भ्रान्ताः शङ्खचूडं स्फुटमणिकिरणैर्भासुरैरुत्तमाङ्गैः
जिह्वाकोटिद्वयेन क्षितिममृतरसास्वादलोभाल्लिहन्तः ।
सम्प्रत्याबद्धवेगा मलयगिरिसरिद्वारिपूरा इवैते
वक्रैः प्रस्थानमार्गैर्विषधरपतयस्तोयराशिं विशन्ति ॥ २४ ॥

[नायकमुद्दिश्य]। वत्स जीमूतवाहन! न त्वं जीवितदानमात्रस्यैव योग्यः, तदयमपरस्ते प्रसादः, (क)—

हंसांसाहतहैमपङ्कजरजःसम्पर्कपङ्कोक्षितै-
रुत्पन्नैर्मम मानसादुपनतैस्तोयैर्महापावनैः ।
स्वेच्छानिर्मितरत्नकुम्भनिहितैरेषोऽभिषिच्य स्वयं
त्वां विद्याधरचक्रवर्तिनमहं प्रीत्या करोमि क्षणात् ॥ २५ ॥

अनुतापो यस्य तेन समुपजातपश्चात्तापेन सञ्जातानुशयेन। पक्षिपतिना गरुडेन। देवलोकात् स्वर्गात्।

अमृतवृष्टेः साफल्यमाह, सम्भ्रान्ता इति।—शङ्खचूडं सम्भ्रान्ताः सत्वराः, शङ्खचूडेन मिलिता इत्यर्थः, स्फुटा व्यक्ताः, मणीनां, फणास्थितानामिति शेषः, किरणाः प्रभाः येषु तादृशैः, अत एव भासुरैः दीप्तिमद्भिः, उत्तमाङ्गैः शिरोभिः, फणैरिति यावत्, उपलक्षिताः, [इत्थम्भूतलक्षणे तृतीया] तथा अमृतरसस्य सुधाद्रवस्य, अन्तरीक्षात् वृष्टस्य भूमौ पतितस्य चेति भावः; आस्वादलोभात् पानलालसया, जिह्वाकोटिद्वयेन जिह्वाद्वितयाग्रभागेनेत्यर्थः, क्षितिं पृथिवीं, लिहन्तः आस्वादयन्तः, मलयगिरेः सरितां नदीनां, वारिपूरा इव जलप्रवाहा इव, आबद्धवेगा वेगवन्तः, एते परिदृश्यमानाः, विषधरपतयः भुजगेन्द्राः, वक्रैः कुटिलैः, प्रस्थानमार्गैः गतिभिरित्यर्थः, नागानां जिह्मगत्वादिति भावः, सम्प्रति तोयराशिं समुद्रं, विशन्ति आश्रयन्ति, "किं न पश्यति भवान्?" इति गम्यवाक्येनान्वयः। [अत्र उपमावृत्त्यनुप्रासालङ्कारयोः सङ्करः]। स्रग्धरा वृत्तम् ॥ २४ ॥

(क) त्वम् ईदृशः महासत्त्वस्त्वमिति यावत्। जीवितदानमात्रस्यैव केवलप्रत्युज्जीवनरूपप्रसादस्यैवेत्यर्थः; केवलजीवनदानमात्रमेव तव एतत्सत्त्वस्य न योग्यपुरस्कारः, अपरमपि पुरस्कारं त्वमर्हसीति भावः। प्रसादः अनुग्रहः।

प्रसादस्य फलं विवृणोति, हंसेति।—एषा सुप्रकटेति भावः, अहं स्वयम् आत्मना,

अपि च—

> अग्रेसरीभवतु काञ्चनचक्ररत्न-
> मेष द्विपश्च धवलैर्दशनैश्चतुर्भिः ।
> श्यामो हरिर्मलयवत्यपि चेत्यमूनि
> रत्नानि मे समवलोकय चक्रवर्त्तिन् ! ॥ २६ ॥

स्वच्छेनेत्यर्थः, प्रीत्या परितोषेण हेतुना, अथवा स्वभावेन, सङ्कल्पमात्रेणैवेत्यर्थः, मम मानसात् मानसं मन एव मानसं सरोवरविशेषः तस्मात्, उत्पन्नैः उद्भूतैः, तथा हंसानाम् अंसैः स्कन्धभागैः, ( मानससरोवरे हंसकुलः कविसमयप्रसिद्धः ) आहतानां ताडितानां, हेमपङ्कजानां काञ्चनकमलानां, तत्सरोवरस्थितानामिति भावः, रजोभिः परागैः, हंसासङ्घट्टनात् पतितैरिति भावः, सम्पर्कः सम्बन्ध एव, पङ्कस्तेन ; यद्वा—सम्पर्केण सम्बन्धेन हेतुना, यः पङ्कः जलेन सह एकीभावात् उद्भूतः कर्दम इत्यर्थः, तेन कलुषैः मिश्रैः सम्पृक्तैरिति यावत्, महापावनैः मानसोत्पन्नत्वात् अतिपवित्रैः, स्वेच्छया निजेच्छया, निजाभिलाषानुसारेणेत्यर्थः, निर्मितेषु रत्नकुम्भेषु निहितैः स्थापितैः, उपनतैः मदिच्छानुसारेणात्र स्वयमेव समुपस्थितैः, तोयैः जलैः, त्वाम् अभिषिञ्च्य विद्याधराणां चक्रवर्त्तिनम् अधीश्वरं, करोमि। [ अत्र तोयानां महापावनत्वं प्रति दिव्याः मानसोत्पन्नत्वरूपस्य पदार्थस्य हेतुत्वोत्कीर्त्तनात् काव्यलिङ्ग-मलङ्कारः, तथा मानसमेव मानसम् इति रूपकालङ्कारः, अपि च प्रथमपादे अनुप्रासश्च, इत्येषां संसृष्टिः ]। शार्दूलविक्रीडितं वृत्तम् ॥ २५ ॥

अग्रसरीभवत्विति।—चक्रवर्त्तिन् ! हे सम्राट् ! काञ्चनानां चक्रं राशिरेव, रत्नम् ; यद्वा—काञ्चनं काञ्चनमयं, चक्ररत्नं चक्रश्रेष्ठम्, उत्कृष्टास्त्रविशेष इत्यर्थः, अग्रसरीभवतु तवाग्रे गच्छतु। धवलैः शुभ्रैः, चतुर्भिः दशनैः दन्तैः उपलक्षितः, चतुर्दन्त इत्यर्थः, [ इत्थम्भूतलक्षणे तृतीया ] एष द्विपश्च ऐरावतश्च इत्यर्थः, श्यामः कृष्णवर्णः, हरिः अश्वः, ( "यमानिलेन्द्रचन्द्रार्क-विष्णुसिंहांशुवाजिषु। शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु ॥" इत्यमरः ) अपि च किञ्च, मलयवती मूर्त्तिमती राजलक्ष्मीस्वरूपा इति भावः, इति अमूनि मे मम, रत्नानि समवलोकय पश्य। [ अत्र काञ्चनचक्रमेव रत्नम् इति रूपकानुप्राणितः चतुर्दन्तगजेन्द्र-श्यामवर्णाश्वादीनाम् अलौकिकवस्तूनां वर्णनेन उदात्तालङ्कारः ]। वसन्ततिलकं वृत्तम् ॥ २६ ॥

अपि च—आलोकयन्त्यममी शारदशशाङ्कनिर्मलबालव्यजनहस्ता मणिमरीचिविरचितेन्द्रचापभक्तयो भक्तिनमितपूर्वार्धकायाः ( ब ) प्रणमन्ति नमन्ति च मतङ्गमलकादयो विद्याधरपतयः । तदुच्यतां, किं ते भूयः प्रियमुपकरोमि ?

नायकः । अतः परमपि प्रियमस्ति ?—

त्रातोऽयं शङ्खचूडः पतगपतिभयाद्वैनतेयो विनीतः
तेन प्राग्भक्षिता ये विषधरपतयो जीवितास्तेऽपि सर्वे ।
मत्प्राणाऽऽप्त्या च मुक्ता न गुरुभिरसवश्चक्रवर्तित्वमाप्तं
साक्षात् त्वं देवि ! दृष्टा प्रियमपरमतः किं पुनः प्रार्थ्यसे यत् ? ॥३०॥

---

( ब ) आलोकयन्तीं दृश्यमानाम् । शारदेति ।—शारदः शरत्कालीनः, यः शशाङ्कः चन्द्रः, तद्वत् निर्मलं विशदं, बालव्यजनं चामरं, हस्ते येषां तथाभूताः । मणीनां रत्नानां, स्वस्वगात्रपरिहितानामिति भावः ; मरीचिभिः किरणैः, रचिताः निर्मिताः, इन्द्रचापस्य शक्रधनुष इव, भक्तयः रचनाः यैः तथाभूताः । तथा भक्त्या नमितः पूर्वार्धकायः देहस्य पूर्वार्धभागः यैः तथाविधाः । प्रणमन्ति प्रणामं कुर्वन्ति, नमन्ति च विनम्राश्च भवन्ति ; चक्रवर्तित्वादिति भावः ।

सर्वप्रकारेणैव प्रियसाधनात् नास्ति किञ्चिदपि प्रियप्रार्थनाया अवकाश इत्याह, त्रात इति ।—अयं शङ्खचूडः पतगपतेः पक्षिराजात् गरुडात्, यत् भयं तस्मात् त्रातः रक्षितः, वैनतेयः गरुडः विनीतः विनयं गतः, शिक्षितः इति यावत् ; नागभक्षणरूपपरद्रोहपरित्यागात् सर्वथा शान्तभावं समाश्रित इति भावः, तेन वैनतेयेन, प्राक् पूर्वं, ये विषधरपतयः नागेन्द्राः, भक्षिताः, ते सर्वेऽपि जीविताः पुनर्जीवनं प्राप्ताः, मत्प्राणाऽऽप्त्या मम प्राणप्राप्त्या, मम जीवनलाभेन हेतुना इत्यर्थः, गुरुभिश्च पित्रादिभिरपि, असवः प्राणाः, न मुक्ताः न त्यक्ताः, चक्रवर्तित्वं विद्याधरसाम्राज्यम्, आप्तं प्राप्तं, मयेति शेषः, किं बहुना, हे देवि ! त्वं, दुर्लभदर्शनाऽपि इति भावः ; साक्षात् दृष्टा मया साक्षात्कृता, अतः एभ्यः प्रियेभ्योऽपीत्यर्थः, अपरं प्रियं किम् ? अस्तीति शेषः, यत् पुनः प्रार्थ्यसे याच्यसे, मया त्वमिति शेषः, नातः परमपि प्रियमस्तीति न किमपि प्रार्थये इत्यर्थः । [ अत्र प्रार्थनाभावे पूर्वोक्तवाक्यानां हेतुत्वात् काव्यलिङ्गमलङ्कारः । किञ्च, पूज्यां देवीं प्रसादयितुं सानन्दप्रार्थितवरत्यागात् साध्यालङ्कृतिः प्रियोक्तिरिति ]। स्रग्धरा वृत्तम् ॥ ३० ॥

तथाऽपीदमस्तु [ भरतवाक्यम् ]।—

वृष्टिं हृष्टशिखण्डिताण्डवकृते मुञ्चन्तु काले घनाः
कुर्वन्तु प्रतिरूढसन्ततहरित्सस्योत्तरीयां क्षितिम्।
चिन्वानाः सुकृतानि वीतविपदो निर्मत्सरैर्मानसैः
मोदन्तां सततञ्च बान्धवसुहृद्गोष्ठीप्रमोदाः प्रजाः॥ १८॥

[ इति निष्क्रान्ताः सर्वे ]।

इति पञ्चमोऽङ्कः।

ग्रन्थावसाने भरतवाक्येन जगन्मङ्गलमाशीर्वचनमाह, वृष्टिमिति।—घनाः मेघाः, काले उपयुक्तसमये, हृष्टानां मेघोदयेन सम्प्रहृष्टानां, शिखण्डिनां मयूराणां, ताण्डवकृते नर्त्तनार्थं, मेघोदये हृष्टाः मयूराः नृत्यन्तीति प्रसिद्धिः; वृष्टिं मुञ्चन्तु वर्षन्तु इत्यर्थः, तथा क्षितिं पृथिवीं, प्रतिरूढं उद्गतं, सन्ततम् अविच्छिन्नं, यत् हरित् हरिद्वर्णं, सस्यं धान्यादि, तदेव उत्तरीयं गात्राच्छादनवसनरूपं यस्यास्तथाभूतां, कुर्वन्तु च, पृथ्वीं सर्वशस्यसम्पन्नां विदधतु इत्यर्थः, तथा प्रजाः जनाः, ("प्रजा स्यात् सन्ततौ जने" इत्यमरः) वीता विगता, विपत् यासां तथाभूताः, तथा निर्मत्सरैः अन्यशुभद्वेषवर्जितैरित्यर्थः, ("मत्सरोऽन्यशुभद्वेषः" इत्यमरः) मानसैः मनोभिः, सुकृतानि सत्कार्य्याणि, चिन्वानाः अर्जयन्त्यः, तथा बान्धवानां भ्रातृपितृव्यादीनां, सुहृदां मित्राणाञ्च, गोष्ठीषु सभासु, प्रमोदन्ते नन्दन्ति इति तथाविधाः सत्यः, सततं मोदन्तां हृष्यन्तु च। [ अत्र मुञ्चन्तु कुर्वन्तु च इति क्रिययोर्यौगपद्यात् समुच्चयालङ्कारः। किञ्च नायकस्य स्वसंरचितप्रार्थनाप्रयोगात् आशीर्नाम नाट्यालङ्कारः,— "आशीरिष्टजनाऽऽशंसा" इत्युक्तलक्षणयोगात् ]। शार्दूलविक्रीडितं वृत्तम्॥ १८॥

इति पण्डितकुलपतिना बि, ए, उपाधिधारिणा श्रीजीवानन्द विद्यासागर-
भट्टाचार्य्येण विरचितायां तदात्मजाभ्यां प्रतिसंस्कृतायाञ्च
नागानन्दनाटकव्याख्यायां पञ्चमोऽङ्कः।

